# द्राह्यायणश्रौतसूत्रम्

## प्रथमः प्रपाठकः

### प्रथमः पटलः

### प्रथमः खण्डः

अथ विध्यव्यपदेशे सर्वक्रत्वधिकारः १ मन्त्रविधिश्चादिग्रहणेन २ उत्तरादिः पूर्वान्तलक्षणं ३ एकश्रुतिविधानान्मन्त्रान् कर्माणि चोद्गातैव कुर्यादनादेशे ४ यावद्यजुरनादिष्टान्तान् मन्त्रान् ५ ऋचश्चादिग्रहणेन ६ ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गो द्व्यसतश्चानतिकृष्णोऽनतिश्वेतः ७ याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यातः ८ सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रात्याचक्षीत ९ महन्मे वोच इति करिष्यन् प्रतिमन्त्रयेत १० तन्न जह्यादप्रोक्तेऽपि करिष्यामीति विदित्वा ११ आवसथं सोमप्रवाकाय लवणमन्नं दध्नाहारयेत् १२ प्रहिणुयात्प्रस्तोतृसुब्रह्मण्यौ पुरस्तात्कर्मभ्यः १३ प्रागुदक्प्रवणं देवयजनं लोमशं समं १४ पुरस्ताच्चास्यापः स्युः १५ तत्त्रिशुक्रियमिति ह्याह १६ तदभावे महावृक्ष उदपानो महापथो वा १७ न चास्य स्थलतरमदूरे स्यात् १८ देवयजनमात्रं च पुरस्तात् १९ विपर्यस्याभिचरणीयेषु २० स्थलादन्यद्देवयजनमात्राच्च २१ स्वयं व्रजेत्क्रय उपवसथ्ये वा २२ उदङ्ङेव तु गृहेभ्यः प्रथमं देवो देवमेत्विति २३ दूरं व्रजित्वा विहाय दौष्कृत्यम् २४ बद्धानामासीति पन्थानमापद्योत्तरं वेद्यन्तमाक्रम्य दक्षिणमीक्षमाणः पितरो भूरिति २५ यजुरन्तरयेऽन्वाहारं धानंजय्यः २६ उपेक्षणं शाण्डिल्यः २७

इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले प्रथमः खण्डः

### द्वितीया खण्डः

अर्हयिष्यन्त आहरन्ति विष्टरौ पाद्यमर्घ्यमाचमनीयं मधुपर्कमिति १ तेषामेकैकशस्त्रिर्वचनम् २ गोश्च ३ विष्टरयोरेकमध्यास्ते । धौतौ पादावितरस्मिन् ४ पृथक् सावित्रीपादैर्मधुपर्कस्य पिबेत् ५ इदमन्नमयं रस इमा गावः सह श्रियेति तु पुरस्तादेकैकस्य ६ वाग्वहु

बहु मे भूयादिति द्वितीयस्य ८ मनो वाव सर्वं सर्वं मे भूयादिति तृतीयस्य ९ सर्वे स्वाहाकारान्ताः १० रसोऽसि वानस्पत्यो रसं मयि धेहीति मधुमन्थस्य पिबेदिति गौतमः ११ वानस्पत्य इति प्रवचनम् १२ तथा दधिमन्थोदमन्थयोः १३ पयस्योऽपयस्य इति तु रसादेशः १४ एते वैव प्रवचने कालिन्दः सारस्वत इति वा १५ शेषं ब्राह्मणाय दद्यात् १६ तदभावेऽद्भिः संप्रोन्द्याब्राह्मणाय १७ कुरुतेति गवि प्रोक्तायां ब्रूयात् १८ उत्सृन्दयन्नों कृतो धर्मस्तृणान्यत्तु पिबतूदक-मुत्सृजतेति ब्रूयात् १९ सर्वेषां यज्ञोपवीतोदकाचमने नित्ये २० कर्मोपयतामव्यवायोऽव्यावृत्तिश्च यज्ञाङ्गैः २१ प्राङ्मुखकरणं चानादेशे २२ क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवहनं गत्वान्तरेणेषे शमीशाखां पलाशशाखां वा सपलाशां पाणौ कृत्वावतिष्ठेत २३ अध्वर्युसंप्रैषं सर्वत्राकाङ्क्षेत् सुब्रह्मण्यायाम् २४ रश्मी धारयंश्छाखया प्रेष्येद्गावौ २५ दक्षिणं पूर्व्वं २६ सुब्रह्मण्योमिति त्रिराह्वयेत्प्राचि वर्त्तमाने मध्यमया वाचा २७ षट्कृत्वा प्रतीचि २८ पूर्व्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगुह्य तामेवैषामनुत्क्रम्याव्यवा-यन्नग्नीषोमौ यथार्थं स्यात् २९

इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

अथैतद्राजवाहनं सुब्रह्मण्याय दद्यात् । दक्षिणावत्सु कर्मसंयोगात् १ आतिथ्यायां संस्थितायां दक्षिणस्य द्वारबाहोः परस्तात्तिष्ठन्न-न्तर्वेदिदेशेऽन्वारब्धे यजमाने पत्न्यां च सुब्रह्मण्योमिति त्रिरुक्त्वा निगदं ब्रूयात् २ इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरावास्कन्दिन्नहल्यायै जारकौशिकब्राह्मण गौतमब्रुवाणेति ३ एतावदहे सुत्यामिति यावदहे स्यात् ४ अद्येति समानाहनि ५ पूर्वयोः प्रणवान्तयोर्विरमेत् ६ मेने ब्रुवाणेति च ७ आग्नेय्यां षणे जारेति च ८ पृथग्यजतिशब्देषु च ९ देवा ब्रह्माण आगच्छता-गच्छतागच्छतेति गौतमः १० आगच्छेति पूर्वं देवाह्वानाद्धानंजय्यः

११ आगच्छ मघवन्नित्येके १२ एवं त्रिराहूय पत्नीयजमानावुपहवमिच्छमानावुपहूय यथार्थं स्यात् १३ उपहूत इत्युपहवः १४ एवं सर्वेषूपसदन्तेषु १५ याश्चोद्ध्वर्मुपसद्भ्यः १६ उत्करे तु तत्र तिष्ठन् १७ प्राक् च सुत्यादेशान्नामग्राहोऽग्नीषोमीयवपायां हुतायां परिहृतासु वसतीवरीषु प्रातरनुवाकोपक्रमणवेलायामसौ यजत इति १८ प्रत्येकं गृह्णीयाद्यजमाननामधेयानि यानि स्युः १९ अमुष्य पुत्रः पौत्रो नप्तेति पूर्वेषां २० अथावरेषां यथाज्येष्ठं स्त्रीपुंसानां ये जीवेयुः २१ जनिष्यमाणानामित्यन्त उक्त्वा सुत्यादेश प्रभृति समापयेत् २२ अथ नामग्रहणवाक्येषु स्वरं विधत्ते अर्थनिर्वचनमुच्चान्तम् २३ वैभक्ते च स्यादौ वैभक्तश्चैव २४ उच्चाच्च नीचे नीचम् २५ जनिष्यमाणानामिति मध्ये द्वे २६ यजेश्चादिः २७ दक्षिणासु चोदितोऽनुव्रजन् दक्षिणाः सनामग्राहामाह्वयेत् २८ प्रणवनामानि वा २९ हविर्धानप्रवर्तनाग्नीषोमप्रणयनयोश्च सुब्रह्मण्येत्येके ३० अनाह्वानमाचार्याः प्रातरनुवाकान्ता सुब्रह्मण्येति ३१

इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले तृतीयः खण्डः ३

## चतुथः खण्डः

साद्यस्क्रेष्वग्नीषोमीयायामिष्टौ वपाकालाज्यभागयोर्हुतयोः संस्थितायां वेत्येके १ लुप्ता त्वधिकरणापायात् २ अग्निष्टुत्स्वाग्नेयो निगदः ३ तत्र गौतमीयम् ४ अग्न आगच्छ रोहिताभ्यां बृहद्भानो धूमकेतो जातवेदो विचर्षण आङ्गिरसब्राह्मणाङ्गिरसब्रुवाणेति प्राक् सुत्यादेशात् ५ देवानां स्थानेऽग्नयः ६ अथ धानञ्जय्योऽग्न आगच्छ रोहितव आगच्छ भरद्वाजस्याजसहसः सूनो वारावस्कन्दिन्नुषसो जारेति ७ आङ्गिरसप्रभृतिसमानम् ८ इन्द्रं शक्रेति ब्रूयाद्विश्व इति देवाननिरुक्तेषु ९ अनिरुक्तं प्रातःसवनयोश्च १० अभिषेचनीयदशपेयावन्तरेण सदा नामग्राहः ११ अहर्गणेष्वहराद्यन्तयोराह्वयेत् १२ उत्तरार्थाहरन्तिकी १३ अग्नीषोमीयप्रभृत्यहीनेषु सर्वाः सनामग्राहाः १४ दीक्षानुपूर्वेण दीक्षितानां सत्रेषु नामग्राहः १५ ऊद्ध्वर्मतिरात्रादग्रहणम् १६

तस्यान्ते श्वः सुत्या गौतमस्य १७ नार्मेधान्त एके १८ अद्यसुत्या शाण्डिल्यस्य १९ अनाह्वानं धानञ्जय्यः २० तिसृषु चोत्तमासु नामग्राहः २१ उत्तमयोरिति गौतमः २२ तथासत्यग्नीषोमीयव-पायामग्रहणं धानंजय्यः २३ अनाह्वानं वा २४ सर्वत्र सत्रेष्वग्रहणं शाण्डिल्यः २५ ऊर्द्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे द्वे वा २६ सर्वाः प्राक् त्रिकद्रुकेभ्यस्तृतीये २७ कौण्डपायिनतापश्चितयो-र्द्वादशाहे सुत्येति विदित्वा परिमाणाह्वानं धानञ्जय्यः । सुत्यामागच्छेतीतराः २८ ऊर्ध्वं चातिरात्रात् प्रथमस्य सारस्वतस्य प्राक् श्वः सुत्यायाः २९ कौण्डपायिनसारस्वतयोरिष्टयनेषु सुत्या-वच्छाण्डिल्यः ३० तथाग्निहोत्रमासे तथाग्निहोत्रमासे ३१

इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले चतुर्थः खण्डः ४

द्वितीयः पटलः । प्रथमः खण्डः

सर्वत्रानादेशे परिसामानि प्रस्तोता गायेत् स्वाध्यायवत् स्वासु १ तृचापत्तीनि तृचेषु त्रिरितराणि २ शार्ङ्गारूढवदाङ्गिरसे वा त्रिर-भ्यस्येदन्तरा पराचा ३ तथा च होता ४ लिङ्गोपपत्तिश्चैवम् ५ अन्तरेण चात्वालोत्करौ संचरः सर्वत्रानादेशे ६ तदाप्नानं तीर्थम् ७ अग्नौ चीयमाने पश्चिमेन पुच्छं गत्वा दक्षिणेऽपिकक्षे तिष्ठेद्यत्र वोपदध्युः ८ पश्चिमेन पक्षावपिकक्षौ ९ पूर्वेणोपप्लवौ १० पुष्करपलाश उपधीयमाने हिरण्मये पुरुषे स्वयमातृणासु च शर्करासु व्याहृति सामानि गायेद्यजमानं सत्यं पुरुषो भूर्भुवः स्वरित्येतासु पृथक् ११ तेषां स्थाने स्वयं चिन्वान ऋतनिधनमाज्यदोहं पुरुषव्रतमेकानुगानं रथन्तरं वामदेव्यं बृहदिति १२ रथन्तरप्रभृतीनि विकल्पन्ते लोक-सामभिरावृत्तैः १३ संचितमग्निं दक्षिणेन गत्वा अग्नआयूंषीति प्रत्यङ्मुखस्तिष्ठञ्छिरसि गायत्रं गायेन्निरुक्तम् १४ प्रत्यावृज्य रथन्तरं दक्षिणे पक्ष उदङ्मुखः पश्चाद्वा प्राङ्मुखः १५ पश्चिमेन पुच्छं गत्वा बृहदुत्तरे पक्षे दक्षिणामुखः । पश्चाद्वा प्राङ्मुखः १६ प्रत्यावृज्य यज्ञायज्ञीयं पुच्छे संवत्सरश्चेद्दैक्षः सौत्यो वा १७ ऋतुष्ठायज्ञायज्ञी-

यमन्यत्र १८ वामदेव्यं दक्षिणेऽपिकक्षे तिष्ठन् गायेत् प्रजापतिहृदय-मुत्तरे १६ एतानि गौतम उत्तरेणाग्निं गत्वा १७ एतान्येव प्रदक्षिणं प्रत्यन्ताद्धानञ्जय्यो यज्ञायज्ञीयं पुच्छे प्रजापतिहृदयस्थाने च वामदेव्यम् १८ वामदेव्यं दक्षिणेऽपिकक्षे १९ प्रजापतेर्हृदयमुत्तरे २० एतानि गौतम उत्तरेणाग्निं गत्वा २१ एतान्येव प्रदक्षिणं प्रत्यन्ताद्धानंजय्यः २२ यज्ञायज्ञीयं पुच्छे २३ प्रजापतेर्हृदयस्थाने च वामदेव्यम् २४ दक्षिणेनाग्निं गत्वा गौतमीये व्यत्ययं ये पक्षयोः शाण्डिल्यः २५ शिरसि च गीत्वोत्तरे पक्षे २६ यथागीतमितराणि २७ उत्तरे चोपप्लये स्वंहृदयदेशमालभ्य प्रजापतेर्हृदयम् २८ अध्वर्युपथे श्यैतम् २९

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले प्रथमः खण्डः

## द्वितीयः खण्डः

प्रवर्ग्यवत्युत्तरेण सम्राडासन्दीं गत्वा पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्यग्ना-यिरिति गायेत् १ पदाय पदाय स्तोभेत् २ निधनायैव स्तौभीं वाचं विसृजेत् ३ उपग्रहप्रभृतीनि स्वरयन्तमुपेयुर्ये घर्म उपयुक्ताः स्युः ४ पत्नी च ५ एवं मध्ये ६ प्राप्य चाहवनीयायतनम् ७ परिषि-च्यमानेऽप उपस्पृश्य वार्षाहरम् ८ इष्टाहोत्रीयं परिषिक्ते ९ तस्य सर्वे निधनमुपेयुः १० द्वीपं चेद्धर्मपात्राणि हरेयुः सन्ततान्येव गायेन्नाकाङ्क्षेत्परिषेचनम् ११ श्यैतं प्रत्याव्रजन् १२ तृचे वैकस्यां वा यजमानो निधनमनूपेयात् १३ पूर्वया द्वारा प्रपद्योत्तरेणाग्नीन्गत्वा पश्चाद्गार्हपत्यस्य तिष्ठन् महावीरायतनं प्रेक्षमाणो वामदेव्यं गायेदिति धानञ्जय्यः १४ श्यैतान्तानीति शाण्डिल्यः १५ गणः सामान्युत्तराणि १६ आभिरूप्यात् कर्तव्यानीत्येके १७ न वा कुर्यात् १८ स्वे वा यज्ञे कुर्यादित्येके १९ यथाकामी वा २० दीक्षणीयायां तार्क्ष्यसामनी गायेत्त्यमूष्वित्येते २१ प्रायणीयायाँ प्रवद्भार्गवं २२ उदयनीया-यामुद्वत् २३ आतिथ्यायाँ गायत्रीसामौशनम् २४ अञ्जन्ति घर्मं तत्र

शार्ङ्गम् २५ रजतजातरूपे उपदधति तच्छुक्रचन्द्रे २६ अभीन्धत्ते तद्धर्मस्य तन्वौ २७ रुचितं प्राहुस्तद्धर्मस्य वा रोचनमिन्द्रस्य वेति २८ धेनुमुपसृजन्ति तद्धेनु २९ तस्य देवतासु सोपायं स्तोभमाहरेद-नुपायं पादायाभ्यस्येदुत्तमं पादं पञ्चनिधनवदिति गौतमः ३० समस्येत्पददेवते इति शाण्डिल्यः ३१ नोत्तमं पादं पुनरभ्यस्येदिति वार्षगण्यः ३२ शेषं यथा मरुतां भूतौ तथा समापयेत् ३३ पय आहरन्ति तत्पयः ३४ आसिञ्चन्ति तत्सिन्धुषामात्वा विशन्त्विन्दव इति ३५ शफाभ्याँ परिगृह्णन्ति तद्वसिष्ठस्य शफाविति ३६ ह्रियमाणे व्रतपक्षौ ३७ हुतेऽश्विनोर्व्रते अहोरात्रयोर्वा ३८ रौहिणाभ्यां पुरो-डाशाभ्यां चरन्ति तद्राजन रौहिणके ३९ परिघर्म्यं सम्राडासन्द्यां समारोपयन्ति तदारूढवदांगिरसमित एत इति स्वर्णिधनं ४० अग्निं प्रणयन्ति तत्राग्नेर्व्रतम् ४१ अग्नीषोमौ तत्रोभयोर्व्रते ४२ सुत्यायां यज्ञसारथि प्राक् प्रातरनुवाकोपाकरणादाग्नीध्रीयेऽहरहः ४३ सत्रे सत्रस्यर्द्धि ४४ उक्षा चेदनुबन्ध्य औक्ष्णोरन्ध्रे ४५ ऋषभ आर्षभम् ४६ उन्नते त्रैककुभम् ४७ वशायां वाशम् ४८ अज आजिगं ४९ मेष और्णायवम् ५० पयस्यायाँ स्वारं पयोनिधनम् ५१ उदवसानी-यायामुद्वंशीयम् ५२ उपक्रम्य समापयेदाक्रतोरपवर्गात् ५३

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

औदुम्बरीमुच्छ्रयिष्यन् पूर्वेण देवयजनं गच्छेद्दक्षिणतश्चेदस्यावसथः स्यात् १ उत्तरेण यद्यन्यतः २ पूर्वौ सदसो द्वार्यौ श्वभ्रावन्तरेण प्रपद्याग्नेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन्नध्वर्युणा सहोच्छ्रयेद्दक्षिणोत्तरो-त्तानाभ्यां पाणिभ्यां द्युतानस्त्वेति ३ आयोरिति श्वभ्रेऽवदध्यात् ४ अवधाय जपेन्नमः समुद्राय नमः समुद्रस्य चक्षसे मामायुनर्वाहसी दूर्गस्यूर्जेदा ऊर्जं मे देह्यूर्जं मे धेह्यन्नं मे देह्यन्नं मे धेहीति ५ तान्न विसृजेदावच्छादनात् ६ अध्वर्युणाभिहुतायां जुहुयात् तस्यैवावृता-न्तरेण विशाखे ७ घृतेन द्यावापृथिवी अप्रीणाथाँ स्वाहेति पूर्वां

प्रजापतये स्वाहेत्युत्तराम् ८ अन्यतरां वा स्वाहाकारद्वितीयाम् ९ यथा भूमिमाज्यं प्राप्स्यतीति १० आज्यं होम चोदनास्वनादेशे ११ अधस्ताद्विशाखस्य परिगृह्य जपेद्दिवि देवान्दृँह मयि प्रजामिति १२ अन्तरीक्षे वयाँसि दृंह मयि पशूनिति मध्ये १३ पृथिव्यामध्यौ-षधीर्दृँह मयि सजातानिति मूले १४ ऊर्द्ध्वँहोमाद्याजमानं धानंजय्यः १५ स्वयमिति गौतमशाण्डिल्यौ यां वा कांचिद् ऋत्वि-गाशिषमाशास्ते यजमानस्यैव सेति १६ अवच्छाद्यमानायां दिव्यं छद्मासि संतनिनाम विश्वजनस्य छाया नमस्तेऽस्तु मा मा हिंँसीरिति १७ दक्षिणेन श्वभ्रान् गत्वापरौ द्वार्यावन्तरेण प्रपद्यैतत् कुर्यादिति शाण्डिल्यः १८ उत्तरेणेति धानंजय्यः १९ गौतमीयमितरत् २० यथैतं निष्क्रामेत् २१

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

यूपमुच्छ्रीयमाणमनुमन्त्रयेरन्नूमण ऊर्ध्वभरसं त्वेति १ एतान्येवो-हस्थानानि यावन्तः स्युः २ यत्र तिष्ठन्त उच्छ्रीयमाणं पश्येयुरिति शाण्डिल्यः ३ अन्तर्वेद्येवेति धानंजय्यः ४ न बहिर्वेदि यजुर-वकल्पत इति ५ विश्वरूपाणां गानं ज्योतिष्टोमे यजमानेनोक्तः प्रत्या-चक्षीत । चतुष्टोमस्तोमसंपदतिरेकाद्ग्रहशस्त्राभावाच्च ६ वसती-वरीयो ग्रहः प्रातरनुवाकः शस्त्रमासां न च संपत्कोपो यथान्यैः परिसामभिर्गायैवेति चेद्ब्रूयात् ७ न मामनामन्त्र्य प्रातरनुवाकमुपा-कुर्यादित्यध्वर्युं ब्रूयात् ८ होतारं प्रातरनुवाकायोपविष्टं पूर्वेण गत्वा यजमानश्च पूर्वया द्वारा प्रपद्यान्तरेण हविर्धानं पूर्वेण चक्रे उदङ्मुख उपविशेत् तूष्णीम् ९ पुरस्ताद्यजमानः प्रत्यङ्मुखः १० युञ्जे वाच ँ शतपदीं गायेत्सहस्रवर्तनि गायत्रं त्रैष्टुभं जगद्विश्वारूपाणि संभृता देवा ओकाँसि चक्रिर इत्येतस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानंजय्यः स्वाध्यायस्वरेण ११ मनसैव यजमान उपस्वरेत् १२ त्रिषु त्रिषु पादेषु गायेदिति गौतमः १३ पूर्वं पूर्वमतिसृजन् गायत्रीकारम् १४

प्रगाथकारं वा १५ गीत्वा यथार्थं स्यात् १६ विश्वरूपाश्चेद्गा-येज्ज्योतींष्यपि गायेत् १७ परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं पुरा तस्माद्धोतारमारमेत्युक्त्वा १८ आग्रयणस्य वानुहिंकारं पवित्रं धारयन् १९ आस्तावं वा प्राप्य स्तोमयोगात् २० अग्निर्ज्योतिर्ज्योति-रग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः सूर्योज्योतिर्ज्योतिः सूर्य इत्येतेषु पादेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत् २१ तानि नान्यत्र विश्व-रूपाभ्यः २२ नान्यत्र विश्वरूपा ज्योतिष्ठोमात् २३ सहचराणि ह्येतानि विश्वरूपाश्च ज्योतींषि च ज्योतींषि २४

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले चतुर्थः खण्डः ४

इति द्वितीयः पटलः समाप्तः २

## तृतीयः पटलः प्रथमः खण्डः

युगपत्कर्मसु सर्वेषूद्गातुर्दक्षिणमनु बाहुं प्रस्तोता सव्यं प्रतिहर्ता १ होता प्रातरनुवाकमनुच्याभूदुषा इति यदा ब्रूयादथ वेदिमाक्रामेयुर्मृदा-शिथिरेति । मामाहि ँ सीरिति मंत्रान्त इति । बहिर्वेद्येतज्जपित्वा मा मा हि ँ सीरित्येतावतैवेति धानंजय्यः २ सवनमुखेषु च यजुषा ३ अहरहरिति गौतमः ४ सकृत्क्रताविति शाण्डिल्यः ५ याव-द्धाक्रामेयुरित्येके ६ हविर्द्धानं प्रवेश्यमाना वसतीवरीरनुप्रविशेयुः ७ तस्य रराट्यामालभ्य विष्णोः शिरः ८ इष ऊर्ज इति प्रवि-शन्तोऽन्तरेणेषे बाहूनवहृत्य पार्ष्णीरनुद्यच्छन्तो युनज्मीति राजान-मभिमृशेयुर्यः प्रातःसवनाय ९ अविभक्तश्चेत्सर्वम् १० नचेत्प्राप्नुयुः सोमं देशेनैव ११ प्रस्तोता प्रथमोऽतिसर्पेत् १२ तत उद्गाता ततः प्रतिहर्ता १३ दक्षिणस्य हविर्धानस्य पश्चात् सव्यावृत उपविशेयु-र्ऋतस्य सदन इति १४ पुरस्ताच्चोपरिष्टाच्चर्चः सर्वत्र जपेयुर्यासु करिष्यन्तः स्युः १५ अत्र तु बहिष्पवमानस्य १६ अभिषुते राज-न्यृतपात्रमसीति द्रोणकलशमालभ्य वानस्पत्य इति प्रोहेयुः १७ दक्षिणे पाणावुद्गाता दशापवित्रं कुर्वीत १८ अक्षं चेदुपहन्युः पुनः प्रोहेयुः १९ अन्तरेणाक्षविष्कम्भौ दशापवित्रं द्रोणकलशे प्रास्ये-

दनुपघ्नन् २० संहितौ चेदुभावुपरि २१ सर्वं रथोपस्थमुपर्युपर्युत्तरेण रथजङ्घां रथश्चेत् २२

इति द्राह्यायणश्रौतसूत्रे तृतीये पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

प्रत्यावृज्य ग्राव्णो युञ्ज्यात् १ प्रदक्षिणमष्टमदेशेषु स्थवीयाꣳस्य- भ्यन्तराणि कृत्वा २ तानि मुखानि ३ दक्षिणार्ध्यपूर्वार्ध्यं प्रथमम् ४ तानभिमृश्य जपेयुर्मरुत इति ५ ऋतसदन एतज्जपित्वा युक्ताःस्थ वहतेत्येतावतैवेति धानंजय्यः ६ पश्चाद्दक्षिणतो वा द्रोणकलश- मध्यूहेयुरिदमहमिममिति ७ यजमानशब्दं सर्वत्र यथार्थं कुर्युः ८ अनुजपेयुरन्येन कृते मन्त्रौ ९ ब्राह्मणविहितादन्यत्रैष कल्पः काम्यानाम् १० द्वेष्यकल्पस्त्ववशिष्यते । तत्रापि नित्यधर्मग्रहणे प्राप्ते आह द्वेष्यकल्पादन्यत्र ११ विपर्यस्य तु तस्मिन् १२ तूष्णीं च योजना- ध्यूहने १३ इदमहममुमिति दक्षिणापरमष्टमदेशं निरूहेत् १४ द्वेष्य- प्रियकल्पयोर्मन्त्रौ राजन्यूहेत् १५ तस्य च विशमादिशेत् १६ तं चैवान्नाद्येन १७ उपाꣳशुसवनो नाम ग्रावा पञ्चमस्तमुपरिष्टाद्द्रोण- कलशस्य कुर्याद्राष्ट्रजिघाꣳसुः प्रतीवेशाँ बलवतीं विशमादिशन् १८ एतेषामेकं कृत्वा पथ्यं कुर्यादिति गौतमः १९ तमेवेति धानंजय्यः २० पृष्ठानामन्ते पूर्वयाद्वारा निष्क्रम्य काम्यं शाण्डिल्यः २१ पवित्रेण द्रोणकलशꣳ संमृज्याद्वसवस्त्वेति बुध्नं रुद्रास्त्वेति मध्यमादि- त्यास्त्वेति बिलम् २२ एतेषामेकैकेन त्रिस्त्रिरनुसवनꣳ संमृज्यादिति धानंजय्यः २३ सर्वैः सर्वेष्विति शाण्डिल्यः २४ सर्वैर्बुध्नं सर्वैर्मध्यं सर्वैर्बिलमित्येके २५ बिलं मध्यं बुध्नमित्यपरम् २६ अवधूय पवित्रमुदग्दशमवाङ्नाभिवितनुयुः पवित्रं त इति २७ तृचेनैके २८ संततायां धारायामुद्गाता जपेत् प्रशुक्रैत्विति २९ अमुष्य राज्यायेति प्रियं राजानमादिशेत् ३० राज्ञो राज्यायेति वा ३१ यजमानस्य राज्ञो राज्यायेति वा ३२ सोमस्य राज्ञो राज्यायेति वा ३३ सोमस्येत्येव ब्रूयात् सोमराजानो हि ब्राह्मणाः ३४

इति द्राह्यायणश्रौतसूत्रे तृतीये पटले द्वितीयः खराडः २

तृतीयः खराडः

आग्रयणं गृह्णन्नध्वर्युर्हिं करोति तदा प्रवृणीरन्नग्निः प्रस्तोताहं मानुषो वृहस्पतिरुद्गाताहं मानुषो वायुः प्रतिहर्त्ताहं मानुषः इति यथालिङ्गम् १ न प्रवृणीरन्निति धानंजय्यः २ प्रवृणीरन्नेवेति शाण्डिल्यः ३ अत्र वाचं यच्छेयुः ४ ऋतसदने वा ५ वेदिं वाक्रामन्तः ६ स्तुते बहिष्पवमाने विसृजेरन् ७ उत्तराद्धविर्धानात् ध्रुवस्थालीँ हरन्तः पश्चिमेनोद्गातृन् हृत्वा तेनैव प्रतिहरेयुः ८ अध्वर्युं निष्क्रामन्तं प्रस्तोता सन्तनुयात् २ तमुद्गाता ३ उद्गातारं प्रतिहर्त्ता ४ तं ब्रह्मा ५ ब्रह्माणं यजमानः ६ न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरन् ७ तथाज्यं राजानं सर्वत्र ८ अपि ह्यध्वर्यवोऽप्यकुशला भवन्तीति ९ अभिपीड्य पवित्रमध्वर्युर्निःसर्पन्तं प्रस्तोता संतनुयात् १० तमुद्गातोद्गातारं प्रतिहर्ता तं ब्रह्मा ब्रह्माणं यजमानः ११ पञ्चर्त्विजः संरब्धाः सर्पन्तीत्येतानाह १२ दोषवचनात् व्यवच्छेदाज्जुगुप्सेरन् १३ न राजानमालभ्यानुस्पृश्याप आज्यमालभेरँस्तथाज्य ँ राजानं सर्वत्र १४ एष सोमस्य यदाज्यमिति तयोरसमवायमाह १५ अध्वर्युणा हुते प्रवृतहोमौ जुहुयुर्गत्यानुपूर्व्येण बेकुरा नामासि सूर्यो मेति १६ संसुतसोमे त्वधिकामुद्गाता जुहुयात् संवेशायोपवेशायेति यथासवनं छन्दाँस्यादिशन् १७ ऋचँ सामेति स्वाहाकारान्तया तृतीयां सर्वत्र १८ स एवेति शाण्डिल्यः १९ महागिरिमहानदी रथाहर्वायुव्यवायेष्वसँसवः २० पृथग्जनपदे च २१ अविद्वि-षाणमात्रादित्येके २२ हुत्वा जपेयुर्ब्रह्माहं गायत्रीं वाचं प्राणं प्रजापतिं प्रपद्येऽश्मानमाखणं पर्यूह इति २३ अध्वर्युमन्वावर्तेरन् सर्पन्तः २४ सव्यैः पाणिभिः पृथग्दक्षिणा तृणानि निरस्येयुर्योऽद्य सौम्य इति २५ चात्वालदेशं प्राप्याध्वर्यावुपविष्टे तस्मात् प्रत्यगुपविशेयुर्यो म आत्मेति २६ प्रत्यङ्मुखः प्रस्तोतोदङ्मुख उद्गाता पश्चिमेनोद्गातारं गत्वा दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्ता २७ सव्याधरानुपस्थान्

कृत्वा द्यावापृथिव्योः सन्धिमीक्षमाणाः समानि मुखानि धारयन्तः २८ एवं सर्वस्तोत्रेष्वासीरन् २९

इति द्राह्यायणश्रौतसूत्रे तृतीये पटले तृतीय खण्डः

इति प्रथमे प्रपाठके एकादशः खण्डः ११

चतुर्थः खण्डः

चतुरवराद्ध्र्या उपगाः स्युः १ तथाहि भाल्लवि ब्राह्मणं भवति । योऽनुपगीतं साम आदत्ते मुष्यते रूक्षो भावुको भवत्युपगातृभ्यः प्रस्वरेत् । प्राणो वै स्वरः । प्राणेनैव साम संतनोतीति वल्गुतमं सामोपगीतं भवति । तस्मादप्युपगेयम् २ चत्वार उपगाः स्युश्चतस्त्रो दिशो दिग्भिरुपगायन्तीति च ब्राह्मणम् ३ षड्वा । षड्तव उपगातार इति च ब्राह्मणम् ४ यावन्तो वा संस्वरेरन् ५ ते हो इत्येतेनाक्षरेणोपगायेयुरोमिति यजमानः ६ पृष्ट्यन्तरयोरुपविश्य भक्त्यन्तराणि छादयन्तो मन्द्र उपगा भवन्ति ७ त्र्यन्तर उपगीथः प्रातःसवनादन्यत्र ८ मन्द्रस्त्वेव प्रातःसवने ९ निधनाय निधनायोपरमेयुः १० तत्राप्येक एकाक्षरेषु नोपरमन्ति ११ ते स्वां स्वां भक्तिमनुच्छ्वसन्तो ब्रूयुः १२ पदे वोच्छ्वसेयुः स्तोभे वा १३ नान्तरेण पदे न स्तोभौ १४ यत्र वोपपद्येत न तान्तः कुर्यादिति १५ प्रस्तरं प्रतिगृह्य प्रस्तोता ब्रह्मन्त्स्तोष्यामः । प्रशस्तरित्युद्गात्रे प्रयच्छेत् १६ तेन दक्षिणां जङ्घामुपहत्य युञ्ज्यात्स्तोममग्नेस्तेजसेति १७ अन्नं करिष्यामीति जपेत् १८ तूष्णीं चात्वालमुदपात्रं चावेक्षेरन् १९ सामासि प्रतिमा भाहीत्यादित्यम् २० तूष्णीं वा २१ सकृद्धिंकृत्य बहिष्पवमानेन स्तुवीरन् २२ अहिंकृता प्रथमा रेतस्या । हिंकृताः पराः २३ रथन्तरवर्णोत्तमा अविसृष्टहिंकारा २४ तस्या ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेत् २५ अन्नमकरमिति स्तुत्वा जपेत् २६ श्येनोऽसीति प्रस्तरे यजमानं वाचयेत् २७ तँसर्वत्र स्तुत्वोपह्वयेरन् २८ संवर्चसेतीक्षकान्सहकारिणश्च प्रेक्षमाणो जपेत् २९ नमो गन्धर्वायेत्यादित्यम् ३० देशेनैवान्तर्हितश्चेत् ३१ एतत्सर्वं कुर्यादुत्तरयोः पवमानयोः ३२ प्रवरास्तु

निर्वर्तन्ते ३३ चात्वालावेक्षणप्रभृति च प्राग्घिङ्कारात् ३४ प्रवेशन-संमार्जने चान्तरेण तृतीयसवने ३५ कुम्भं तु तत्र संमृज्यात् ३६ उत्तरे हविर्धाने यः पूर्वो द्रोणकलशावृता ३७ तं पूतभृदित्याचक्षते तं पूतभृदित्याचक्षते ३८

इति तृतीये पटले चतुर्थः खण्डः ४

इति द्राह्यायणश्रौतसूत्रे प्रथमः प्रपाठकः समाप्तः १

द्वितीयः प्रपाठकः । चतुर्थः पटलः । प्रथमः खण्डः

स्तोमयोगेऽग्निर्युनक्त्वित्येतस्य स्थाने वायुर्युनक्तु सूर्यो युनक्त्विति नानासवनयोः १ विहारं धानंजय्यः २ अग्नेस्तेजसा बृहस्पतिस्त्वेति प्रातः सवनं इन्द्रियस्येन्द्रियेण बृहस्पतिस्त्वेति माध्यंदिने सूर्यस्य वर्चसेति तृतीयसवने ३ सर्वैरेकैकं यथाम्नायꣳ शाण्डिल्यः ४ साम्ने साम्ने हिं कुर्युः ५ वृषकोऽसि स्वरोऽसीति यजमानवाचने ६ स्तुत्वा बहिष्पवमानेन प्रस्तरादुभयतश्चतुरङ्गुलं परिच्छिद्य तृणं चात्वाले प्रविध्येद्यदि स्तुतं यदि वाद्य सुष्टुतमर्वाक् स्तुतं यदि वातिष्टुतं यत्तयोरन्येन दिवमारुहेमेममन्येन जयेम लोकमिति ७ तत्रैवोदपात्रं निनयेत् समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छतारिष्टास्त्वाभुयास्म मा परासेचिनो धनमिति ८ बहिर्वेद्युदञ्चोऽयुञ्जि पदान्युत्क्रामेयुः प्राग्दशभ्यः ९ अभिदक्षिणमावृत्या व्रज्याग्नीध्रीयं बहिष्पवमानर्चो-ऽधीयीरन् १० अनुव्याहार्षीन्मामिति यमिति शङ्केत तस्या आग्नीध्रीय आहुतिवज्रं प्रहरेद्यज्ञशं च त उपचते नमश्च ते सत्योऽसि सत्य-सꣳस्कृतस्तस्य ते य ऊनं योऽकृतं योऽतिरिक्तमदर्शं तस्य प्राणे-नाप्यायस्व स्वाहेति ११ न व्यभिचरेदिति धानंजय्यः १२ अहीन-बहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र १३ आद्यन्तयोश्च सत्रेषु १४ प्राग्धिष्ण्य विहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः १५ वैदत्रिरात्रे सत्रन्यायं गौतमः १६ अहीनन्यायं धानंजय्यः १७ मन्द्रं प्रातःसवने स्तुवीरन् १८ उत्तरोत्तर्युत्तरयोः सवनयोः १९ समेन

वोभयोः २० एतस्यां वेलायां प्राश्नीयुः २१ अनुसवनं तु सत्रेषु २२ सवनमुखीयान् भक्षयित्वा सन्नेषु नाराशꣳसेषु २३

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

वपायां हुतायां धिष्ण्यानुपतिष्ठेरन् १ चात्वाले तु मार्जनं पूर्वꣳ सत्रेष्विदमापः प्रवहनावद्यं च मत्रं च यद्यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणमापो मा तस्मादेनसो दुरितात्पान्तु विश्वतो निर्मामुञ्चामि । शपथान्निर्मा वरुणादुतनिर्मा यमस्य षड्विंशात्सर्वस्मादेव किल्विषात् सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति २ सम्राडसीत्याहवनीयमुपस्थायोदञ्चो गत्वास्ताव चात्वाल शामित्रानुदङ्मुखास्तुतोनभो संमृष्ट इति ३ विभुरसीत्याग्नी ध्रीयमुपतिष्ठेरन् ४ तमुत्तरेण संचरः सर्वत्र ५ दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्द्धानमाहवनीयं च पृष्ठहोमाय ६ पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो वह्निरिति होतुर्धिष्ण्यम् ७ श्वात्र इति मैत्रावरुणस्य ८ तुथ उशिगन्धारिरवस्युरिति ब्राह्मणाच्छंसिप्रभृतीनामुदञ्चः ९ शुग्ध्युरिति मार्जालीयं तत्रैव तिष्ठन्तः १० ऋृतधामेत्यौदुम्बरीम् ११ समुद्र इति ब्रह्मणः सदनम् १२ उत्तरेण सदो गत्वान्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिरितिप्रजहितम् १३ अज इति गार्हपत्यम् १४ सगरा इति दक्षिणाग्नेरायतनम् १५ कव्य इति दक्षिणां वेद्यन्तम् १६ तत्रैव तिष्ठन्तः सर्वान्त्समन्वीक्षमाणः पातमेति १७ एकैकमुपस्थायैतद्ब्रूयुरिति शाण्डिल्यः १८ बहुशब्दानेकवत् कुर्वन्तः १९

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

रौरुकीणि चेत्कुर्युरादित्यं प्रथममुपतिष्ठेरन्नध्वनामिति १ आहवनीयमुपस्थाय तमेवापिजोसि जायमान इत्यपिजोसि नवजात इति

वायुमग्निमनुप्रहरन्ति तमभिप्रेत्य २ यदा चात्वालमथोत्करं तुमुलो-ऽस्याक्रन्दं कृत्वेति ३ यदा शामित्रमथ यत्राऽवध्यं निखनन्त्यूव-ध्यगोहोसि पार्थिव इति ४ यदाग्नीध्रीयमथ यत्राच्छावाक आसीनो होतर्युपहवमिच्छत्युपहव्योऽसि नमस्य इत्युपहव्योऽसि तनूपा इति वा ५ यदा ब्रह्मणः सदनमथ सदस्यस्य सदस्योऽसि मलिम्लुच इति ६ यदा दक्षिणं वेद्यन्तमथ प्राजापत्यमसीति पत्नीशालामैन्द्रमसीति सदो वैष्णवमसीति हविर्द्धानमैन्द्राग्नमसीत्यग्नीध्रीयं वैश्वदेवमसीति वा ७ अथ तथैव समस्तेन ८ सर्वे स्थ सोम्यासः सर्वे सोमं पिबत सर्वे सोमस्य पीतिमानशध्वे पातमेति । समानं परम् ९ ऋतस्य द्वारौस्थ इत्यपरौ द्वारबाहू सदसः संमृज्य मामा संताप्तमिति प्रविशेयुः १० दक्षिणेनौदुम्बरीं गत्वा तस्या उत्तरत उपविशेयुर्नमः सखिभ्यः इति ११ पूर्वेण प्रस्तोतारं प्रतिहर्ता गच्छेत् १२ एतस्यां वेलायाँ समुपह्वयेरन्त्सर्वे सत्रेषु १३ मिथोऽन्यत्र १४ सर्वे यजमानम् १५ द्वारबाहुसंमार्जनप्रभृत्येतत्सर्वं कुर्युर्यदा धिष्ण्यानुपतिष्ठेरन् १६
इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

याजमान ब्रह्मत्वे चेदुद्गाता कुर्यात् १ आग्नीध्रीयमुपस्थाय पूर्वेण परिक्रामेत् २ सदसानुपस्थाय तत एवेक्षमाणः पात्नीशालान् ३ इतरथेतरौ ४ ऋतस्य द्वारौ स्थ इति पूर्वौ द्वारबाहू सदसः संमृज्य दक्षिणस्य पुरस्तादुदङ्मुख उपविशेदिति शाण्डिल्यः ५ तस्यैव पश्चा-त्प्रत्यङ्मुख इति धानंजय्यः ६ उक्ते प्रवेशनोपवेशने ७ ऋत्विक्पथेन गत्वा समस्तोपस्थानप्रभृतिसमानम् ८ दक्षिणार्धे तु सदसः पूर्वमुप-वेशनम् ९ प्रस्तोतुः प्रत्युपवेशनं ब्रह्मोपवेशनेन निरस्तः परावसुरिति दक्षिणा तृणं निरस्येत् ११ आवसोः सदने सीदामीत्युपविशेत् १२ नमः सखिभ्यः पूर्वसद्भ्यो नमोऽपरसद्भ्यो भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्युक्त्वौदुम्बरीं गत्वोपविशेत् १३ अनुपविशेयातामितरौ १४ एतेनानुपूर्व्येण सर्वं यथासनं चिकीर्षेत् १५ ग्लायेच्चेदध्यौदुम्बर्येव

१६ सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनुप्रविशेत् १७ ब्राह्मणाच्छंसिनं वा १८ तेनास्य समुपहवः स्यात् १९ भक्षश्च समानः २० बीभत्सेयातां चेन्नानाचमसौ स्याताम् २१ सर्पत्सु न शून्यं सदः कुर्यात् २२ तस्य दधिभक्षान्तं कर्म २३ स निवर्तेत सत्रेषु २४ विसंस्थिते सवने पूर्वया द्वारान्तरेण होतुर्धिष्ण्यं मैत्रावरुणस्य च संचरः २५ तद्यथैतम् इति २६

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले चतुर्थः खण्डः

## पञ्चमः खण्डः

चमसं प्रतिगृह्य प्रस्तोता दक्षिण ऊरावाधाय दक्षिणेन पाणिना विधायासीत १ उपहूयमानायामिडायामनूपधारयेदनुपघ्नन् २ वषट्कर्तुरनुभक्षꣳ सर्वत्र भक्षयेयुः ३ मिथ उपहूयोद्गाता प्रथमः ४ दक्षिणमनु बाहुं दण्डं कृत्वा श्येन इत्यवेक्ष्येन्दविति द्विरल्पं भक्षयेद्यथा सवनं छन्दांस्यादिशन् ५ ऊर्ध्व इति मुख्यान् प्राणानभिमृशेत् ६ सोम रारन्धीति हृदयम् ७ सोम गीर्भिरिति नाभिम् ८ एवमितरौ कुर्यातां प्रतिहर्ता पश्चात् ९ तं स आप्याययेदभिमृश्याप्यायस्वेत्येतया गायत्र्या १० सर्वे वा ११ तां तृतीयसवने द्विर्ब्रूयुः १२ सं ते पयाꣳसीति माध्यंदिने १३ गायत्र्यैवानुसवनमाप्याययेदिति शाण्डिल्यः १४ द्वितीयाः सवनेषु नाराशंसाः १५ पूर्वयोश्च तृतीयौ १६ तेषामनवेक्ष्य भक्षणम् १७ अवमैरिति प्रातः सवने ऊर्वैरिति माध्यंदिने काव्यैरिति तृतीयसवने १८ पितृभिरिति सर्वत्रानुसꣳहरेत् १९ प्रत्यभिमर्शने यथाकामी २० प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत् २१ प्रथमं तृतीयसवने २२ आवर्त्तिषु तृणे प्रतिगृह्य प्रस्तोता प्रयच्छेद्यथाप्रस्तरम् २३ अनाह्रियमाणयोर्न मन्त्रं जह्यात् २४ तथैव जङ्घामुपहत्य युञ्ज्यात् स्तोमं दीक्षायै तपसो मनसो वाच इति २५ नाना धानंजय्यो यत्रानन्तराणि चत्वारि २६ अन्तःसर्वेषां प्रजापतिस्त्वेति २७ प्रथमेनाल्पीयस्सु २८ तत्प्रभृतीनि रात्रौ २९ तथातिरिक्तस्तोत्रेषु ३० सर्वैरेकैकं यथाम्नायं शाण्डिल्यः ३१

आवृत्तिन्यायः संधौ ३२ उपवसथ्येऽहनि न समामनेरन् ३३
इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य १ खदिरस्य दीर्घसत्रेष्वेके २ प्रादेशमात्रीः कुशपृष्ठास्त्वक्तः समामज्ञतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः ३ कारयित्वा गन्धवतीभिरोषधीभिरनुलिप्य सर्पिषा सत्रेष्वेके कुशाविधानेन वसनेन परिवेष्ट्य क्षौमशाणककार्पासानां केनचिदुपर्यौदुम्बर्या वासयेत् ४ तां श्वोभूते कुशैरूर्ध्वाग्रैः परिवेष्ट्यैवंजातीयेनैव वसनेन प्रदक्षिणमूर्ध्वदेशेन परिवेष्ट्य स्पृष्टोऽनपश्रित उद्गायेदिति गौतमः ५ धिष्ण्योऽयं भवति न धिष्ण्यमासादयेत् ६ धृष्टमपश्रयतेति धानंजय्यः ७ स एव तदुर्जिश्रितः प्रजाभ्य ऊर्जं विभजतीति ह्याह ८ स्तोष्यमाणानां मध्ये वैष्टुतं वसनं प्राक्समासं वोदक्समासं वोपरि दशमास्तीर्य तत्र प्रस्तोता कुशा विदध्यात् प्रस्तावान्तेषु ९ आद्येऽनेकप्रस्तावासु १० अप्रस्तावास्वादौ ११ उदगग्रं प्रथमं विष्टावं प्राक्संस्थं प्रत्यग्वा १२ तं पश्चिमेन मध्यदेशेनोदक्संस्थं प्रागग्रं प्रत्यग्वा १३ तं पश्चिमेनोदगग्रं प्रत्यक्संस्थम् १४ एवं विधाः पर्याया उत्तरोत्तराः १५ मिथः पर्यायविष्टावान्संदध्यात् १६ पर्यायादिषु हिंकारं स्तुवीरन् १७ उत्तमां प्रस्तुत्यैषेति शꣳसिष्यन्तं ब्रूयात् १८ स्तुतस्य स्तुतमसीति यजमानवाचनम् १९ सवनसंस्थासु प्रशास्त्रोक्ता यथेतमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं मूत्रं कुर्युः २० वाचं यच्छेयुर्यावदुदक्याः स्युः २१ एतन्मृगतीर्थम् २२ तेन भूयः शम्यापरासाद्गच्छेयुः २३ यो भूयो जिगमिषेदाप्रानेन गच्छेत् २४
इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले द्वितीयः खण्डः

तृतीयः खण्डः

अथ धिष्ण्यानुपतिष्ठेरन् १ समस्तेनोत्तरयोः सवनयोरिति गौतमशाण्डिल्यायनौ २ सर्वेणेति धानंजय्यः ३ अनुपस्थानꣳ शाण्डिल्यः

४ एवमेव निष्क्रम्य पृथक्स्तोत्रेभ्यः समस्तेनोपतिष्ठेरन्यान्यूर्ध्वमुक्थेभ्यः ५ पर्यायेभ्यस्तु रात्रेः ६ यथासनमुपविश्य प्रस्तोता हविर्धानं गच्छेन्मध्यंदिने ७ हुत आदित्यग्रहे प्रतिहर्ताभवे ८ उभयत्र सर्वे सत्रेषु ९ पवमानयोरुत्तरयोर्धिष्ण्यविहरणे मार्जालीयँ हरन्तः पश्चिमेन यजमानँ हुत्वा तेनैव प्रतिहरेयुः १० मध्यंदिनेन स्तुत्वा सत्रेषु दधिघर्मस्य भक्षयेयुः समुपहूय दधिक्राव्ण इति ११ तस्या उत्तमं पादं दशमेऽहन्यभ्यस्येयुः १२ पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयँ सदश्च तीर्थेन दक्षिणा नयेयुः १३ सर्वासां देवस्य त्वेति पुरस्ताज्जपः १४ वरुणस्त्वेति यथादैवतं प्रतिगृह्णीयात् १५ यथाजाति मृगान् १६ अप्राणाश्च १७ पुंवन्मिथुनान्यन्यत्राजाभ्यः १८ तेन क इदमित्युपरिष्टाज्जपः १९ तत्रोहापादीनि पदानि २० त्वा देवि दक्षिणेऽद इति च यत्तत्स्यात्तेन दात्र इदमाविशैतत्ते भुञ्जतीति मासा हिँसीरिति च २१ अश्व रथं चेद्दद्यात् २२ पूर्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाश्वमुखानि संमृज्याद्द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकस्याश्वोऽसीत्येतत्प्रभृतिभिरुदक्संस्थमिति धानंजय्यः २३ धुर्यौ प्रथममित्यपरम् २४ दक्षिणं पूर्वं तथा प्रष्टी २५ सर्वाण्येकैकस्मिन्नुदक्संस्थमिति शाण्डिल्यः २६ सर्वाण्येकस्मिँस्तूष्णीमितराणीत्यपरम् २७ एतान्येवाश्वास्वश्वतरेष्वश्वतरीषु च यथार्थमूहेत् २८ त्रिभिश्चेदर्धान्येकस्मिन्नर्धानि द्वयोः २९ द्वैधं द्वयोः ३०

इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

आदित्यानामिति रथशिर आलभ्य जपेत् १ यद्रथ्यं स्याद्वायोरिति चर्मण्यं प्रतिगृह्णीयान्नक्षत्राणामित्यस्थि मयं सूर्यस्येत्ययोलोहे हिरण्यं च २ दक्षिणेन रथं गत्वा रथन्तरमसीति दक्षिणं चक्रमालभेत् ३ वामदेव्यमसीत्यधिष्ठानम् ४ बृहदसीत्युत्तरं चक्रम् ५ अङ्कान्यङ्कु इति चक्रे एव संमृज्यात् ६ वैश्वानर इति दक्षिणेन पादेनारोहेत् ७ तदपि वेदितमवपन्नं दक्षिणं चक्रं निर्वर्त्य खमन्वीक्षयेत् पूर्वस्यान्तेन

ते त्वाग्नय इति ८ ते मेतीतरो ब्रूयात् ९ आरुह्य जपेद्विदैषत इति १० तदपि वेदितं शमरथं शाखास्तम्भमालभ्यान्तरा चक्रवर्त्मन्येतेनैवान्वीक्षेत ११ कृशेति सव्यानभीशूना यच्छेत् १२ दासेति दक्षिणानवगृह्णीयात् १३ अवरुह्य सकृद्वारुणमुक्त्वा यथादैवतमादिश्योपरिष्टाज्जपं जपेदिति गौतमः १४ संमार्जनप्रभृत्येतत्सर्वं कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टाज्जपौ वारुणमश्वेभ्यो रथाय चेति धानंजय्यः १५ ग्लायेच्चेद्यथासनं वैतत्सर्वं जपेत् १६ पृष्ठ्यं चेद्दद्यात् प्राग्वारुणादश्वनामानि जपेत् १७ पुरस्ताज्जपाद्वा १८ तथा दान्तेषु १९ यद्द्रथ्यं स्यात्तेन तत्प्रतिगृह्णीयात् २० अन्नस्येति प्राग्वारुणादवेः २१ पुरस्ताज्जपाद्वा २२ ग्रात्वा कृन्तन्निति वसनस्य २३ तदुदस्येदतान्तवे २४ हिरण्यमल्पीयोऽभोगादागच्छेदौदुम्बर्यामाश्लेषयेत् २५ आग्नीध्रीये वा जुहुयात् २६ समस्तान् व्रीहियवानेकक्रतौ प्रतिगृह्णीयात् २७ तथा तिलमाषान् २८ प्राजापत्येनानादिष्टदेवताः प्रतिगृह्णीयात् २९ तूष्णीमयज्ञे दक्षिणा इति धानंजय्यः ३० भूर्भुवः स्वरिति गौतमः ३१ ओमिति वोमिति वा ३२

इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले चतुर्थः खण्डः ४

## षष्ठः पटलः । प्रथमः खण्डः

पूर्वं नाराशंसं भक्षयित्वाहवनीये प्रस्तोता पृष्ठहोमं जुहुयात् । यत्पृष्ठं स्यात्तदादिश्यादः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहृतमिमं यज्ञमभिसंवसाना होत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहेति पूर्वाम् १ स्वाहाकारेणोत्तराम् २ द्वैधं जुहुयादिति धानंजय्यः ३ अदः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहृतं स्वाहेति पूर्वाम् ४ इमं यज्ञमित्युत्तरां होतृकपृष्ठेभ्य इति ५ रेवतीषु वारवन्तीयमिति षष्ठे पृष्ठादेशं गौतमः ६ महाव्रतमिति व्रते ७ रेवत्यश्च वारवन्तीयं चेति धानंजय्यः ८ यावन्ति पृष्ठस्थानानि स्युः सर्वाण्येव प्रसंचक्षीत ९ पिबतु दधदिति च यथार्थमूहेत् १० बृहता रथन्तरेण वा स्तोष्यमाणः प्राक्स्तोमयोगाद्दश व्याहृतीर्मनसा ध्यायेदैरमिति ११ रथन्तर एवर्चं

यस्ते गोष्विति १२ युक्त्वा स्तोममेतद् ब्रूयादिति शाण्डिल्य ऋचं पूर्वं व्याहृतिभ्य इति १३ इतरद्धानंजय्यः १४ रथन्तरे प्रस्तूयमाने सर्वत्र सम्मीलेत् १५ एकैकं मनसाक्षरꣳ स्तोभैर्वाचा युगपत् संयुज्याद् भकारादिभिरकारान्तैरक्रान्तैः प्रथमस्वरैरकारैरुत्तमो द्वितीयः स्वरः प्राक् प्रतिहाराच्चतुरक्षरꣳ शिष्ट्वा १६ तत्सर्वत्र प्रतिवीक्षेत १७ स्तुत्वा वरं चोदयेत् १८ तस्यापृष्ठस्य सतो निवर्तैरन्धर्माः सह स्तोभैरिति गौतमः १९ स्तोभा एवान्वीयुरिति धानंजय्यः २० अग्निष्टोमसामसंधिषाम्णोरेवापृष्टꣳ स्तोभेदिति शाण्डिल्यः २१ सर्वत्रास्वस्तोत्रीयं न स्तोभेदिति स्थविरो गौतमः २२

इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

वामदेव्येन स्तोष्यमाणः प्राक्स्तोमयोगाद्गावो अश्वाजावयो व्रीहयो यवा इति मनसा ध्यायेत् १ ब्रह्मसाम्नि यः कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीत २ तथेतर उद्गायन् ३ आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डं त्रीꣳत्रीन्वा परया द्वारा हविर्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्युर्यदा सन्नः स्यादत्र पितरो मादयध्वं यथा भागमावृषायध्वमिति ४ तामाह्रियमाणं प्रतिमन्त्रयेरन्नमीमदन्त पितरो यथाभागमावृषायिषत इति ५ सोम्यमाहृतमुद्गातावेक्षेतायुर्मे प्राण इति ६ पुनरस्मासु दध्मसीत्यन्तः ७ तं दशमेऽहन्यभ्यस्येत् ८ यन्मे मादे स्थाने यन्मे यममित्येके ९ पूर्वेण त्वेवावेक्षेत १० तस्मिन्नङ्गुली अवधायाङ्गुष्ठानामिके इत्येकेऽक्षिणी विमृजीत येना-ह्याजिमिति ११ एवमितरौ कुर्याताम् । प्रतिहर्ता पश्चात् १२ तमुत्तरेण प्रतिहर्तारं हरेयुः १३ द्रव्येप्सुर्भुञ्जीतैनं गच्छत्यन्यतरां रोगार्तो वाहतेन वाससा प्रच्छाद्य दक्षिणार्द्ध सदसो गत्वा १४ यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातेक्षेत १५ निधनं प्रति पत्नी दक्षिणमूरुमभिषिञ्चेत् १६ तृतीयायाꣳ स्तोत्रीयायां प्रस्तुतायां सर्वं तदुदकं निनयेत् १७ उत्तमायां स्तोत्रीयायां भुवद्वाजायि भुवद्वाजेष्वित्यभ्यन्नामिति च निधनमनुष्टुभ-

मुत्तमामक्षरेणान्त इति ह्याहेति १८ अनभ्यासं त्वाचार्य्याः १९ निधनं च यथाम्नायं शाण्डिल्यः २० तद्यदानुशꣳसन् होतापोहिष्ठीयां ब्रूयात्तदैनमन्वालभेरन्नपावृण्वानाः २१ अन्यस्थानगतस्य सतो निवर्तेरन् धर्माः २२

इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले द्वितीयः खण्डः

## तृतीयः खण्डः

यदन्यदग्निष्टोमसाम स्यात्तस्य स्युः १ अहिंकारेऽपि प्रतिहारवेलायां पत्नीमुद्गातावेक्षेत २ अनुब्राह्मणमार्चिकान् सन्नामान्त्सर्वत्र कुर्युरप्यन्यस्मिन्त्साम्नि ३ तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयुरर्षृतस्य त्वेति ४ दक्षिणैः पाणिभिः कुशाः संलोभयेयुः ५ प्रतियोजनमेके यजमानवचनादनन्तरम् ६ अत्र वा ७ यजमानं वाचयेत्तन्तवे मा ज्योतिषेति ८ असावनु मा तनुहि ज्योतिषेति यथाज्येष्ठं पुत्रान् ९ जनिष्यमाणा इत्यजातेषु १० जातेष्वजातेषु च पुत्रा इत्येव सत्रेषु ११ वषट्कृते हारियोजनस्य यथैतमपरया द्वारा निष्क्रामन्तो जपेयुः सोमहानु मेहिहीति १२ सुभूरसीत्यादित्यमुपतिष्ठेरन् १३ अस्तमितश्चेद्गार्हपत्यं चन्द्रमसं नक्षत्राणि वा १४ आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमसीति पूर्वां स्वाहाकारेणोत्तराम् १५ हारियोजन्यो नाम धाना द्रोणकलशे भवन्ति । तासामुद्गाता प्रथम आददानः समुपहूता भक्षयिष्याम इति ब्रूयात् १६ तथेतरौ १७ उन्नेतर्युपहवमिष्ट्वा हारियोजनस्य त इति तिरोह्नयस्येत्यति रात्रे सर्वत्र वा यथाधीतं द्विरुपघ्राय पश्चादाहवनीयस्यान्तः परिधि निवपेयुः १८ अनप्रहृतेषु भस्मान्ते १९ अप उपस्पृश्याष्टावष्टौ शकलान्याहवनीयेऽनुप्रहरेयुर्देवकृतस्येत्येतत्प्रभृतिभिरिकारान्तैः २० सकृदेव सर्वाण्युत्तमेनेति शौचिवृक्षिः २१ अप्सुषोमा नाम चमसाश्चात्वालदेशेऽद्भिः पूर्णाः २२ तेषु हरितानि तृणानि प्रास्तानि भवन्ति २३ ते स्वं स्वं चमसं पर्युपविश्याप्सु धौतेस्येत्यवमृश्य जपेयुः २४ मधुमन्नमिति पाणीनुपजिघ्रेरन् २५ शमद्भ्यः इत्युदञ्चं चमसं निनयेयुः २६ कामेत्य-

भ्यात्ममावर्तयेयुः २७ ऊर्गित्युरःसु पाणीन्निदधीरन् २८ प्राणसोमेति मुख्यान् प्राणानभिमृशेरन् २९ आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुर-समुपहूय दधिक्राव्णः इति २३

इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

अग्निष्टपतीत्यवभृथसाम १ तस्यावृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः २ सर्व ऋत्विजो निधनमुपेयुः ३ इष्टाहोत्रीयमभिषेचनीये समस्येति वा ४ अश्वत्रिरात्रे नानावभृथानि सामानि ५ तेषां प्रथमस्य सनादग्न इत्यवभृथसाम ६ यद्वा उ विश्पतिरिति द्वितीयस्य त्यग्नायिरिति वा ७ अवभृथेष्टौ सꣳस्थितायामवभृथनिचुम्पुण निचेरुरसि निचुम्पृणा-वदेवैदेवकृतमेनोऽयासिषमवमर्त्यैर्मर्त्यकृतं पुरु राव्णो देवरिषस्या-हीत्यप उपस्पृश्य त्रिरभ्युक्षेरन् ८ आदित्यमुपतिष्ठेरन्नुद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳस्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ९ अस्तमितश्चेदाहवनीयम् १० तस्मिन्त्समिध आदध्युरेधोऽस्येधिषीमहीति प्रथमाम् । समिदसि समेधिषीमहीति द्वितीयाम् यदेनश्चकृमा वयं यद्वान्यकृतमारिमानया समिधा वयꣳत-दपमृज्महे इति तृतीयाम् ११ तमेवोपतिष्ठेरन्नपो अद्यान्वचारिꣳरसेन समसृक्ष्महि पयस्वानग्न आगमं तं मा सꣳसृज वर्चसेति १२ प्रागुदयनीयादतिरात्रादप्सुषोमान्तमहः सत्रेषु १३ दधिभक्षान्तमहीनेषु १४ यावन्त्यहानि राजानं भक्षयेयुस्तावत्स्वब्राह्मणायोच्छिष्टं न दद्युः १५ अद्भिर्वा प्रोक्ष्य दद्युः १६ तदेष श्लोकः सोममेतत्पिबत यत्किञ्चा-श्नीत ब्राह्मणाः । मा ब्राह्मणायोच्छिष्टं दत्त मा पात्सोममसोमपः इति १७ एतं परिक्रमꣳसर्वक्रतुषु विद्यात् १८ एष ज्योतिः १९ कामाः सर्वे कामाः २०

इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले चतुर्थः खण्डः १२

इति द्राह्यायणश्रौतसूत्रे द्वितीयः प्रपाठकः समाप्तः २

## तृतीयः प्रपाठकः

सप्तमः पटलः । प्रथमः खराडः

षोडशि साम्ना स्तोष्यमाणो यथासनमुपविश्य हविर्धानं गत्वा षोडशिग्रहमवेक्षेतोद्गाता यस्मादन्य इति १ एवमेव प्रातःसवने २ यदि चोत्तरयोरपि गृह्णीयुः ३ अश्वः कृष्णः पूर्वस्याꣳ सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति शाण्डिल्यः ४ अपरस्यां प्राङ्मुख इति धानञ्जय्यः ५ कृष्णाभावे श्यावः ६ तदभावे यः कश्चाश्वः ७ गौर्वाजोऽश्वाभावे ८ यो यः सामाङ्गं ब्रूयात्स हिरण्यं धारयेत् ९ उद्गाता निधनमुपयत्सु १० सर्वे वाभिमृशेयुः ११ अवसर्पति प्रथमं पर्यायं गायेच्छन्नम् १२ विषिते द्वितीयं मध्यमेन १३ अस्तमिते तृतीयमाविः १४ यदोपाकुर्युः स्तुवीरन्नेवाहनि छन्नꣳरात्रावाविः १५ उद्गात्रे दद्यादश्वहिरण्ये दक्षिणावत्सु १६ सत्र एव ग्रहस्य भक्षयेयुरैन्द्रꣳसह इति १७ उदस्य हरिवदहरिकासु चेत्स्तुवीरन् १८ अनुष्टुप्छन्दसा चमसस्य १९ पूर्वेण वा २० तथा कुर्वन्निन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतं तयोरहमनुभक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्विति ग्रहस्य २१ इन्द्रमिद्धरी इति शाण्डिल्यो वाग्देवी सोमस्य पिबत्वित्येतदधिकया २२ ऐन्द्रꣳसह इति चमसस्यासत्रे २३ त्रिष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेदिति गौतमः २४ अनुष्टुप्छन्दसेति धानंजय्यशाण्डिल्यौ २५ अनुष्टुप्छन्दसा रात्रौ २६ पृथक्तृचेभ्यः सन्धौ हिंकुर्युः २७ इष्टयजुष इति भक्षः २८ गायत्रच्छन्दसातिरिक्तस्तोत्रेष्विति गौतमः २९ पृथग्भक्षछन्दोभिरनुपूर्वमिति धानंजय्यशाण्डिल्यौ ३० अनुष्टुप्छन्दसा वा ३१ अच्छन्दसा वा ३२ संधिवद्धा ३३

इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले प्रथमः खराडः १

द्वितीयः खराडः

आहिताग्निरसोमयाजी परꣳसोमेन याजयित्वा परिभक्षं कुर्वीत १ सोमयाज्यपीति शाण्डिल्यः २ हुतायां प्रातराहुतावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत् ३ कंसे चमसे वा द्रप्सानवधाय दक्षिणाग्नावुपसादयेत् ४ स्फ्यदर्भमुष्टी च ५ पश्चिमेन गार्हपत्यं गत्वा

पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयात् । यावद्गृहीती स्यात् ६ तज्जुहुयादिमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् । आपिः पिता प्रमतिः सोम्यानां भूमिरस्यृषिकृन्मर्त्यानाꣳ स्वाहेति ७ एवमेव गृहीत्वापां पुष्पमस्योषधीनाꣳरसोऽग्नेः प्रियतमा तनूरिन्द्रस्य प्रियतमꣳहविः स्वाहेति ८ आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्न उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति ९ दधिशेषं स्रुच्यानीयोदङ्ङावृत्य प्राश्नीयात्तव सोमव्रते वयं मनस्तनूषु पिप्रतः प्रजावन्तो अशीमहीति १० प्रक्षाल्य स्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीती भूत्वाप उपस्पृश्य दक्षिणाग्नेः स्थण्डिलꣳ समूह्याद्भिः संप्रोक्ष्य स्फ्येन सकृदुल्लिख्योल्मुकमुपनिधाय दर्भानुपस्तीर्याप उपनिनीयामीषां द्रप्सानां निपृणुयादवमेभ्यः पितृभ्यः स्वधा सहभक्षेभ्य इति प्रथमम् ११ और्वेभ्यः काव्येभ्य इत्येवमेव दक्षिणा पृथक् १२ अत्र पितरो मादयध्वं यथाभागमावृषायध्वमित्युक्त्वोदङ्ङावृत्यासित्वा यावन्मन्येत तावत् १३ अभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमनन्तरिताः पितरः सोमपीथादिति १४ तान्दर्भान्द्रप्सांश्च दक्षिणाग्नौ प्रहरेत् १५

इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

यज्ञोपवीती भूत्वाप उपस्पृश्य गृहान् व्रजञ्जपेत् । उप्शिवेन मनसा गृहानैमि मानुषान् । गृहामा विभीत मा वेपिढ्व मूर्जं विभ्रत एवमस्यूर्जं बिभ्रद्वः । सुमनाः सुमेघा गृहानैमि मनसा दैवेन । येषामध्येति प्रवसन्येषु सौमनसो बहुर्गृहानुपह्वयामहे । ते नो जानन्तु जानत उपहूता इह गावः । उपहूता अजावयोऽथो अन्नस्य यो रस उपहूतो गृहेषु नः इति १ पश्चाच्छालाग्नेरुपविश्य जपेदिह गावः प्रजायध्वमिहाश्वा इह पुरुषाः । इहो सहस्रदक्षिणोऽपि पूषा निषीदत्विति २ अग्नेस्तृणानि प्रत्यूह्य यः सुहृत्तमभि भाषेत ३ गोषु गा अपि सृजेत् । उपेदमुपपर्चनमासु गोषूपपृच्यतामुपर्षभस्य रेतस्युपेन्द्र

तव वीर्य इति ४ नमो इन्द्रगावो ऋषन्मो आसां गोपति ऋषन्मा साम मित्रयजुर्न इन्द्र मा स्तेन ईशत इति ५ सत्राय दीक्षिष्यमाणाः संवदेरन् सहनः साधुकृत्या नानापापकृत्या यदस्मिन्त्सत्रेऽथ यत्पुरा चकृम कर्तास्मश्च यथोपस्थितमेव नस्तदिति ६ यो नोऽव्रत्यं चरेद्दीक्षितो नः स दीक्षितान् याजयेत् ७ संवत्सरं ह स्म पूर्वेऽन्योन्यस्य क्रोधमाक्रोशं निभृतं शीलमिति संविज्ञाय दीक्षन्ते ८ तेषां दीक्षाप्रभृति पत्नीशालायां भोजनसंवेशने स्याताम् ९ उपवसथ्यप्रभृत्याग्नीध्रीये १० सन्धिवेलयोर्वाचं यच्छेयुः ११ विचक्षणान्तां वाचं भाषेरन् १२ न कंचनाभिवादयेरन् १३ न शूद्रेण संभाषेरन् १४ नाधिष्ण्य उत्तपेरन् १५ न प्रतीच्या द्वारा पत्नीशालाया निष्क्रामेयुः १६ प्राञ्चमुदञ्चं वोच्चारं कुर्वीरन् १७ न बहु वदेयुः १८ न दन्तान् दर्शयेरन् १९ नोच्चैर्जक्षुः २० नाहुतस्याश्नीयुः २१ नैनानन्योन्यानश्नतः पश्येत् २२ सर्वेषां सवनानां प्राश्नीयुः २३ क्रोधानृते वर्जयेयुः २४ एतानि व्रतानि दीक्षासु २५ दीक्षोपसत्सु वा २६ वा सत्रान्तात् २७ उदयास्तमयावभ्याश्रावणं च बहिर्वेदि प्रसृते वर्जयेयुः २८

इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

तेषाः चेदेनाँस्त्रयाणां किंचिदेयाद् गृहपतावुपहवमिच्छेरन् १ तं चेदुद्गातरि २ एष वै यजमानस्य प्रजापतिर्यदुद्गातेति ह्याह ३ दीक्षानुपूर्व्येण वा सर्वेषु ४ परिहृतासु वसतीवरीषु संविशेयुः ५ तेषां चेत् कश्चित् प्रेयादतीर्थेन निर्हृत्याहार्येणानाहिताग्निं दहेयुः । पत्नीं चैवम् ६ अरण्योरग्नीन्समारोप्यते आप्रानेन निर्हृत्य निर्मन्थ्येनाहिताग्निम् ७ मध्यमस्य रात्रिपर्य्यायस्य दैवोदासँहोतृषाम स्यादौर्ध्वसद्मनं वा ८ अभिप्लवस्य द्वितीयेऽहनि भर्गो यश इति प्राग्विषुवतो व्यत्यासँ स्यातामिति गौतमः ९ ऊर्ध्वं च त्रिष्वभिप्लवेषु १० यशो भर्ग इति परेषु ११ सकृद्द्विर्वा यशः पुरस्तात्तथोपरिष्टाद्भर्ग इतरेष्वपरम् १२ भर्गः पूर्वस्मिन् पक्षसि यश उत्तरस्मिन्नित्यपरम् १३

एताभ्यामुक्ते वीङ्कशुद्धाशुद्धीये १४ विषुवत ऊर्ध्वं वीङ्कमेव स्यादिति धानंजय्यः १५ पञ्चमेऽहनि यदहर्ग्रामेगेयᳬं सन्तनि स्यान्मानवात्पूर्वं वाम्रᳬं स्यात् १६ इषोवृधीयसमन्ते पृष्ठ्यानन्तर्ये षष्ठे १७ पूर्वस्मिन् पञ्चसि त्रिषु चतुर्थोऽभिप्लवो लुप्येत १८ एत एवावृत्ता ऊर्ध्वं विषुवतोऽभिप्लवाः १९ तेषां प्रतिलोममहान्युपेयुः २० पृष्ठ्यस्वर-साम्नां च २१ दशरात्रसमीपे त्रिषु चतुर्णामावृत्तानां प्रथमो लुप्येतेति धानांजय्यः २२ उत्तम इषोवृधीयसमन्ते स्यातामिति २३ विपरीत-मेतच्छाण्डिल्यायनस्य २४ विषुवत्समीपे च त्रिषु २५ अभाव इषोवृधीयसमन्तयोः २६ भावस्त्वाचार्याणां भावस्त्वाचार्य्याणाम् २७

इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले चतुर्थः खण्डः ४

## अष्टमः पटलः प्रथमः खण्डः

अथातो गवामयनविकल्पाः १ सर्वं ज्योतिष्टोमेनैके २ अतिरात्र-चतुर्विंशनवाहव्रतातिरात्रा वा यथास्थानᳬंस्युः । शेषो ज्योतिष्टोमेन ३ अत्र वा गो आयुषी दशरात्रमिप्युपाहरेत् स संवत्सरप्रबर्हः शङ्खाहुतमिति च ४ नानाहोभिर्वयं कल्पयामो यथैतद्ब्राह्मणम् ५ अतिरात्रमुभयसामानं कुर्वन्नान्धीगवादुत्तरे औदलबृहती ६ षोडशिमाᳬंश्चेदौदलस्थाने नानदम् ७ पूर्वो बृहतः सामतृचः ८ चतुर्विंशमरथन्तरमेके ९ रथन्तरपृष्ठं वा बृहदनुष्टुप्कम् १० अग्निष्टोम-संस्थं चेत्त्रिंशान्याज्यानि षट्त्रिᳬंशानि पृष्ठानि ११ षट्त्रिंशानि वा होतृकसामानि १२ पृष्ठानां वाष्टाचत्वारिंशानि १३ सर्वाणि वा त्रिंशानि स्तोत्राणि १४ व्यत्यासं वा त्रिणवत्रयस्त्रिंशौ १५ एतदन्तरुक्थ्यम् १६ अभिप्लवᳬंस्वरसाम्नश्च ज्योतिष्टोमे तन्त्रे एके कल्पयन्ति १७ तथा सताᳬंशाटचायनिनः षडहविभक्तीरनुकल्प-यन्ति १८ द्विविधमभिप्लवमेके १९ उपवत्यग्रियवती च व्यत्यासं प्रतिपदौ राथन्तरबार्हतानि चाज्यानि २० आज्यप्रतिपदौ वा २१ औशनकावे अन्त्ये २२ पार्थयामे वा बार्हतानाम् २३ स्वयोन्यभीबर्तो

रथन्तरपृष्ठेषु २४ श्यैतर्च्च बृहत्पृष्ठेषु २५ व्यूढं पृष्ठ्यमेके २६ तस्य समूढात्प्रथमस्याह्नो बहिष्पवमानम् २७ समूढमेके रथन्तरबृहत्पृष्ठम् २८ नानापृष्ठे चोत्तरे चतुरहे रथन्तरबृहती व्यत्यासं पवमानेषु २९ बृहतीषु रथन्तरमनुष्टुप्सु बृहत् ३० ते द्वितीये ३१ बृहदुत्तमँसमूढे ३२ आष्कारणिधनात्पूर्वं कौल्मलबर्हिषम् ३३ आन्धीगवाच्छ्या-वाश्वम् ३४ उपोत्तमं समूढे ३५

इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

आनूपोपक्रमा बृहती पञ्चमे १ मानवात्पूर्वं हारायणम् २ मधुश्चुन्निधनादाकूपारम् ३ उपोत्तमं समूढे ४ बृहतः पूर्वे त्रय एकर्चाः ५ रथन्तरादुत्तरे ६ षष्ठे च बृहतो व्यूढे ७ नित्यौ च शशकर्णौ तृतीये ८ पृष्ठ्येऽभीवर्तकालेये बृहतीष्वनुकल्पयेदिति गौतमः ९ नेति धानंजय्यः १० व्यूहन्नानुकल्पयेदिति शाण्डिल्यायनः ११ एकविंशत्यहकारिण उपरिष्टादभिजितः पृष्ठ्यमुपयन्ति प्राक् च विश्वजितः स्वरसाम्नश्चोक्थ्यान् १२ अभिजिद्विश्वजितौ व्यतिहरन्त्येके १३ अभिजिद्विश्वजितौ व्यतिहरन्त्येके १३ अभिजितो रथन्तरपृष्ठस्य राथन्तरी प्रतिपद्धोतुराज्यं च १४ अभिवायुमित्यौशनम् १५ ज्योतिष्टोमं परम् १६ सुज्ञानमुष्णिहि १७ श्यावाश्वात् पूर्वे गौरीवितबृहती १८ स्वयोनिनी रथन्तरवृहती स्वरसामस्वेके १९ स्वरपृष्ठाश्चेत्स्वारसामिकेषु पृष्ठस्तोत्रीयेषु यथास्वम् २० स्वाराणि चार्भवान्त्यानि २१ द्वैगतगौतमयोः स्थाने रथन्तरम् २२ अन्तरिक्षस्य गौतमम् २३ स्वरस्य बृहद्द्वितीये २४ नित्यश्च सामतृचः २५ औदलत्वाष्ट्रीसाम्नोरुद्धारः २६ विषुवतो दिवैके प्रातरनुवाकमुपा-कुर्वन्ति २७ बहिरस्यैके बहिष्पवमानेन स्तुवते २८ अग्निरिन्द्रा-योपास्मै पवस्व वाच इति स्तोत्रीयं शुङ्गाः २९ वात आवात्विति माषशरावयः ३० यज्ञायज्ञीयभासे व्यतिहरन्त्येके ३१ बण्महां असि सूर्य इन्द्रमिद्देवतातये श्रायन्त इव सूर्यमिति महादिवाकीर्त्यस्य

स्तोत्रीया विकल्पन्ते ३२

इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

बृहत्पृष्ठश्चेदग्नियवती प्रतिपत् १ तृतीयात् साहस्रादाज्यानि नित्यैर्विकल्पन्ते २ उत्सेधस्थाने रथन्तरम् ३ तस्य महादिवाकीर्त्यम् ४ अयं सोमः इति पार्थम् ५ आभिजातानि पृष्ठानि ६ इन्द्रक्रतौ श्यैतम् ७ गोः ककुबुष्णिहौ ८ उद्धरति पिपीलिकमध्यम् ९ श्यावाश्वविकर्णगौरीवितान्धीगवौदलभासान्यनुष्टुभि १० औदलस्थाने वा वाङ्निधनं क्रौञ्चम् ११ अरण्येगेये तृचयोः १२ व्रतात्परे १३ विश्वजिति यज्ञायज्ञीयबृहती व्यतिहरन्त्येके १४ बृहत्पृष्ठश्चेत्तृतीयात् साहस्रात् प्रातःसवनं १५ कालेयस्थाने समन्तम् १६ अयं सोम इति पार्थम् १७ आभिजितानि पृष्ठानि १८ इन्द्रक्रतौ श्यैतम् १९ गोः ककुबुष्णिहौ २० उद्धरति पिपीलिकमध्याम् २१ अनुष्टुप्प्रभृति व्रतात् २२ उत्तरे पक्षस्ययनविकल्पाः २३ अभिप्लवपृष्ठ्यान् प्रतिलोमानुपयन्त्यहरावृत्तकारिणः २४ पृष्ठ्याभिप्लवाननुलोमान् मासावृत्तकारिणः २५ गो आयुषी च व्यतिहरन्ति २६ उत्तमं संभार्यं कुर्वन् सप्तमान्मासान् पृष्ठ्याभिप्लवानुद्धरेत् २७ पञ्चायनमासान् कृत्वा दशरात्रमिश्रादभिप्लवमुद्धरेत् २८ तथा सति पूर्वे पक्षसि विकल्पः २९ षष्ठादभिप्लवपृष्ठ्यानुद्धृत्य चतुर्विंशाद्द्वितीयादह्नः उत्तरान् कुर्यात् ३० समौ पक्षौ चिकीर्षन् पञ्चायनमासान् कृत्वा दशरात्रमिश्रं मासमुद्धरेत् ३१ पञ्चदशौ पक्षौ व्रतस्यापरिमात्कम् ३२ बृहत्पृष्ठं विश्वजितम् ३३ विश्वजित आयुषमेक उपयन्ति ३४ तथा सति गो आयुषोरैकाहिके बृहत्यौ ३५ दशरात्रमेक आवर्तयन्ति ३६ तस्माद्व्रतं यदा परं व्रतान्ते मानसं सांवर्गजिता गोतमाः ३७

इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

ज्योतिषामयनविकल्पाः १ तत्र यदादितोऽन्ततस्तदूर्ध्वं विषुवतः २ मासि मास्याद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः स षट्त्रिंशदूनो नाक्षत्रः ३ सप्तविंशिनो हि मासाः ४ षष्ठाद्यस्याभिप्लवस्य स्थाने ज्योतिर्गौश्च ज्योतिरेवावृत्ते स नवोनो नाक्षत्र एव त्रयोदशी ५ युग्ममासेष्वाद्यस्याभिप्लवस्य स्थाने तत्पञ्चाहः स षडूनश्चान्द्रमसः ६ षष्ठादौ त्रिकद्रुकानभिप्लवं चोपदध्यात् सोऽष्टादशाधिकः पौर्णमासी प्रसवस्तैर्यगयनिक आदित्यस्य ७ उत्सर्जनानि मासि मासि ८ यथान्त एवमावृत्तानामादिः ९ पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वा-ग्निष्टोममुत्तमे १० तद्वैकत्रिकस्तोमम् ११ असृक्षतेति बहिष्पवमानम् १२ गायत्रं गायत्र्यामाश्वमैडं बृहत्यां गोष्ठो वा १३ अया रुचेति गायत्रपार्श्वमार्भवः १४ सवनविधं पशुं कुर्वन्नुत्तममभिप्लवपञ्चाहं कृत्वा षष्ठस्थाने सवनविधः पशुः १५ प्रथमं वाभिप्लवपञ्चाहं कृत्वा मासान्ते सवनविधः पशुः १६ सर्वानूनानेके १७ प्रथमं वाभि-प्लवपञ्चाहं कुर्युः १८ अहनी वा समस्येयुरभिप्लवपृष्ठ्ययोः सांनिपातिके १९ अभिप्लवयोरुत्तमे २० तथा सत्येकादश्यां पूर्वपक्षस्य दीक्षित्वा त्रयोदश दीक्षाः कुर्वीरन् २१ सप्तदश वा २२ व्यत्यासं वा पूर्णो नान् २३ ऊनपूर्णानावृत्ताञ्छालंकायनिनः २४ एकाष्टकादीक्षिण उपसर्गिणः २५ ते तूष्णीमेवत्रिँशमहरासीरन् २६ सवनविधेन वा पशुना यजेरन् २७ अध्वर्युबह्वृचैः समयं कृत्वा दीक्षेरन्नेवमविलोपो भवतीति भवतीति २८

इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले चतुर्थः खण्डः

नवमः पटलः । प्रथमः खण्डः

पृष्ठ्ये रथमतिवहेयुः पश्चात् प्राञ्चं दक्षिणतो वोदञ्चं बहिर्वेदि रथन्तरस्य स्तोत्रे १ बृहतो दुन्दुभिमाहन्युः २ उपवाजयमाना वैरूपेण स्तुवीर-न्नुपवाज्यमाना वा ३ वाचयित्वा यजमानं वातं वात आ वात्विति तृचेनानुमन्त्रयेत ४ वैराजस्य स्तोत्र उपाकृत उपर्यनूरुशकलं निधाय तृणे च तस्योपरि तिरश्चीमरणिं निधायाध्यात्मं प्रजननं कृत्वा

त्रिःप्रदक्षिणमभिमन्थेद्गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमिति गौतमः ५ चतुर्भिरिति धानंजय्यः ६ त्रिभिरिति शाण्डिल्यः ७ अरण्योः सन्धानमालभ्योपजिघ्रेत्पाणी तेजोऽसि तेजो मयि धेहीति ८ मथ्यमाने स्तोमं युञ्ज्यात् ९ जाते स्तुवीरन् १० वाचयित्वा यजमानं पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥ सह रथ्या निवर्तस्वाग्ने पिन्वस्व धारया विश्वप्स्न्या विश्वतस्परि इत्यनुमन्त्र्याभिजुहुयात् ११ तदुक्तं ब्राह्मणेन १२ स्वाहाकारेणोत्तराम् १३ अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन् १४ यो यः सामाङ्गं ब्रूयात्स उदघोषं जनयेत् १५ वाचयित्वा यजमानं ता निनयेदास्तावेऽनाधृष्टासि तां त्वा सोमो राजावतु यामपीथा उपतिष्ठन्त आपो ये शाक्वरा ऋषभा ये स्वराजस्ते अर्षन्तु ते वर्षन्तु ते कृण्वन्त्विषमूर्जꣳरायस्पोषं तद्विदेयेति । समन्या यन्तीति वा समुद्रं वः प्रहिणोमीति वा १६ सर्वैर्वा १७ अष्ठीवतोरवका उपोहेरन् १८ छदिषि वर्षाकामोऽध्यासयेदिति शाण्डिल्यः १९ गोष्ठे पशुकामः २० सभायां यशस्कामः २१ श्मशानेऽभिचरन् २२

इति द्राह्यायणश्रौतसूत्रे नवमे पटले प्रथमः खण्डः

## द्वितीयः खण्डः

वारवन्तीयस्य स्तोत्रे धेनुः संवाशयेयुर्दक्षिणतः कृत्वोत्तरतो वत्सान् १ पूर्वेण सदः संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीस्त्यजेयुः २ वाचयित्वा यजमानं गोनामभिरनुमन्त्रयेत हव्ये काम्ये चन्द्रे ज्योत इडेरन्तेजुष्टे सूनरि मयि वो रायः श्रयन्तामिड एह्यदित एहि जुष्टे जुष्टिं ते गमेयमुपहूता उपहवं वोशीयेति ३ सहर्षभा इति वा ४ उभाभ्यां वा ५ अद्भिश्चेदुपाकुर्युस्ता निनयेदास्ताव आपो हिष्ठीयाभिः ६ षष्ठेऽहनि संस्थितेऽबहुवादिनः स्युः ७ न चाधीयीरन्नोत्तरस्याह्न उपाकरणात् ८ सर्पिर्मधुभ्यामृत्विजो भोजयेदहीनेष्वन्यतरेण वा ९ सर्पिषैव तृतीयसवने सत्रेषु १० एतस्यान्यतरस्मिꣳस्त्र्यहेऽति ग्राह्याणां भक्षयेयुः स्तुत्वा पृष्ठेन ११ विषुवद्व्रतयोश्च १२ त्रिष्टुपछन्दसा पूर्वं

चमसेभ्यः १३ अन्यत्र चैतस्मिन् काले यानाहरेयुः १४ सहधर्मैः सर्वत्र पृष्ठ्यः स्यात् १५ दशमव्रते च १६ अभीवर्तस्तोत्रीयाना-भिप्लविकान् पृष्ठ्ये शंसयेद् ब्राह्मणाच्छंसिना कालेयर्चो-ऽच्छावाकेन सर्वत्र यदा पवमाने स्याताम् १७ सर्वत्रेन्द्रक्रतुं ब्राह्मणा-च्छंसिनोर्ध्वं विषुवतः प्रागतिरात्रात् १८

इति द्राह्यायणश्रौतसूत्रे नवमे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

विश्वजिति वैराजे धर्म्मान् कुर्यात् १ इतरेष्वपि पृष्ठेष्वित्याचार्यमतिः २ सप्तमेऽहन्यग्नेरर्कोऽध्यर्धेडं च सोमसाम मौक्षस्य पूर्वयोः ३ मोक्षसोमसामनी गायत्रस्योत्तरयोरग्नेरर्कस्तिसृष्विति वा ४ साक-मश्वेडानां संक्षारौ व्यतिहरन्त्येके ५ सुरूपक्रौञ्च एकर्चयोरेके ६ नवमस्य ज्यौतिष्टोमः पर्यासः साप्तमिक इत्येके ७ तस्य बृहत्याम-रण्येगेयानि तृचेषु पृष्ठं च ८ वासिष्ठमध्यास्यायाम् ९ वैयश्वं प्राग्भर्गादाभीशवं यशसः १० सप्तैव तृचेषु वैराजामित्यपरम् ११ दीर्घतमसोऽर्कोऽन्त्यः सामराजं वा १२ पृष्ठस्योत्तरयोर्दीर्घतमसोऽर्को माण्डवं चैडंसामराजेऽन्त्ये १३ दशमस्य बहिष्पवमानं द्वितीय-प्रभृतीनां पञ्चानामह्नामनुरूपाः प्रथमाच्च बहिष्पवमानं तन्नवर्चम् १४ अनुरूपेषु तृचाः प्रतिलोमाः ऋचो नवर्च इति गौतमः १५ सर्वत्र तृचा इति धानंजय्यः १६ यथाधीतं नवर्चमिति शाण्डिल्यायनः १७ सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्यः १८ अप्रतिभामेतस्मिन्नहन्य-नुष्टुप्मात्रां कृत्वाचक्षीरन् १९ ज्यायसिच्छन्दसि लुम्पेयुरक्षराणि २० कनीयस्यभ्यस्येयुः २१ वाचैव विब्रूयुर्धानंजय्यो वागनुष्टुविति हि ब्राह्मणं भवति २२ अग्निष्टोमसाम्ना स्तुत्वा प्राक् पत्नीसंयाजेभ्यो यदेभिः प्रसृते परार्ध्यं व्रजितं स्यात्तद्गत्वा प्रत्याव्रज्य मनसानुत्साहे हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयादुपसृजन्धरुणं मात्रे मातरं धरुणो धयन् रायष्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति पूर्वां स्वाहाकारेणोत्तराम् २३

इति द्राह्यायणश्रौतसूत्रे नवमे पटले तृतीयः खराडः ३

चतुर्थः खराडः

आहवनीयं गत्वाऽयंसहोहा इति त्रिरुद्गाता गायेत् १ निधनमितरावनूपेयाताम् २ अभिदक्षिणमावृत्य पूर्वया द्वारा सदः प्रविशेयुः ३ यदाध्वर्युरुपाकुर्यात्तदा मानसेन स्तुवीरन् ४ आयं गौः पृश्निरक्रमीदिति गायत्रेण ५ पृथक् स्तोत्रीयाभ्यो हिंकारम् ६ त्रिकेण स्तोमेनास्तोमयोगायजमानवाचनाकुशाविधानेन ७ प्रतिहारवेलायां प्रतिहर्तापान्यात् ८ उत्तमां प्रस्तुत्यैषेति होतारमीक्षेत ९ सर्वमेतस्मिन् स्तोत्रे मनसा कुर्युः समीक्षणेन विज्ञापयन्तः १० यमध्वर्युर्भक्षं प्रयच्छन् मन्येत तस्य मनसोपहूय कस्त्वा कं भक्षयामीति भक्षयेयुः ११ ब्रह्मोद्यं वदन्तीति १२ गायत्रीं त्रिर्ब्रूयुरिति धानंजय्यः १३ चतुर्होतारम-भिप्रेत्यैतदिति गौतमः १४ तर्के वा कथयेयुर्यथाश्वत्रिरात्र इति शाण्डिल्यः १५ प्रजापतिं परिवदन्ति १६ पापैः कर्मभिरित्येके न त्ववीमहे १७ अपि वाध्वर्युबह्वृचानां किंचित्स्यात् १८ एतस्यां वेलायां वरान् वृणीरन् मनसा यानिच्छेयुः १९ अभयं धानंजय्यः सर्वकामानपराधात् २० उत्तरत उद्गातौदुम्बरीं गृह्णीयात् पश्चात् प्रतिहर्ता दक्षिणतो ब्रह्मा पुरस्तादितरे सर्वे २१ अथ जपेयुरिह धृतिरिह स्वधृतिरिह रन्तिरिह रमध्वं मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमध्वमिति वोभौ वा २२ वाग्यता अपिधाय द्वारे आसीरन्ना-नक्षत्रप्रवचनात् २३ प्रोक्ते नक्षत्रे पूर्वया द्वारोपनिष्क्रम्य सुब्रह्मण्या-प्रणवैर्वाचं विसृजेरन्निति धानंजय्यः २४ श्रुत्वैवाहूयमानाय इति शाण्डिल्यः २५ वरवरणवाग्यमने यजमान एव कुर्यादहीनेषु २६ कृत्वेतरे यथार्थं कृत्वेतरे यथार्थम् २७

इति द्राह्यायणश्रौतसूत्रे नवमे पटले चतुर्थः खराडः ४

इति द्राह्यायणश्रौतसूत्रे तृतीयः प्रपाठकः समाप्तः ३

चतुर्थः प्रपाठकः । दशमः पटलः । प्रथमः खराडः

महाव्रतस्य पृष्ठ उपाकृते युक्त्वा स्तोमं परिमादो गायेदिति भाण्डितायनः १ प्रतिगृह्य तृणेऽयुक्त्वेति गौतमशाण्डिल्यौ धानंजय्यश्च २ प्रागेव स्तोत्रोपाकरणादित्येके ३ दक्षिणेनाग्नीध्रीयं गत्वोत्तरेणाग्निं प्राणप्रभृतिभिरुपतिष्ठेरँस्तदुक्तं ब्राह्मणेन ४ सर्वाण्युद्गाता सकृत्सकृद्गायेन्निधनमितरावनूपेयाताम् ५ अपि मध्ये निधनेषु ६ आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत् ७ तेनैव प्रत्याव्रज्य पुच्छम् ८ व्रतपक्षयोः पूर्वेण दक्षिणं पक्षम् ९ उत्तरमपि कक्षमुपतिष्ठेरन् १० विश्वे देवा इति वसिष्ठस्य निहवमूहेत् ११ चात्वालमुपस्थायोत्तरेणाग्नीध्रीयं गत्वा पश्चात्तिष्ठन्तः १२ तत एव प्रत्यङ्मुखा इति धानंजय्यः १३ तस्योत्तमं निधनमा तमितोरुपेयुः १४ पूर्वेण हविर्धाने पुरस्तात् प्रत्यङ्मुखाः पश्चादितरेण १५ तत एवेक्षमाणा मार्जालीयं नाके सुपर्णमिति यद्द्वन्द्वेषु १६ यथा हविर्धाने तथा सदः १७ अन्तर्वेदि प्रत्यङ्मुखा गार्हपत्यमिति धानंजय्यः १८ तस्यैव पश्चात्तिष्ठन्त इति शाण्डिल्यः १९ इन्द्रप्रभृति प्रत्यक्षं निधनमुपेयुः २०

इति द्राह्यायणश्रौतसूत्रे दशमे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

अथ राजानं संनाहयेत् १ तस्य द्व्यवराध्यौ रथावनुयायिनौ स्याताम् २ पूर्वेण देवयजनँसंनह्येरन्नन्ये तस्मात् ३ दक्षिणेन परियायुः ४ पूर्वेण पत्नीशालामुद्गाता गत्वा दक्षिणे वेद्यन्ते प्राञ्चो दर्भान् सँस्तीर्य तेष्वेनं प्राङ्मुखमुपवेशयेत् ५ अथास्मै वर्माभिहरेत् ६ अन्यं वाभिहरन्तमनुमन्त्रयेतोत्तिष्ठ राजन् परिवर्मास्यश्वयुक्तो रथो विततो दैव आखणो विशाँ राजा ब्राह्मण एधि गोप्तेति ७ पश्चिमेन परियाहीत्युक्त्वा तेनैव प्रत्याव्रज्योत्तर एनं वेद्यन्तेऽवस्थाप्य ब्रूयाद्धस्तत्रं बध्नीष्वोज्ज्यमायुधं कुरुष्व त्रीनिषूनुपकल्पयस्वायस्मयानन्यमेव कं चतुर्थमिति ८ प्रतिधत्स्वेति ब्रूयात् ९ तं प्रतिदधानमनुमन्त्रयेत वैणावताय प्रतिधत्स्व शंकुं मापप्रोष्ठ मोतेति पप्तद्ब्रह्मणो गुप्त्यै विधृत्यै धारयात्रेति १० संभृत्यातिष्ठेति ब्रूयात् ११ उत्तरेणाग्नीध्रीयं

पूर्वापरे चर्मणी विबध्नीयुर्दक्षिणेन रथपथं शिष्ट्वा १२ तं ब्रूयात् प्रदक्षिणं देवयजनं परीया पूर्वं चर्मागमनेषु विध्येरेकैकेनोत्तरोत्तर्यनतिपातयन्नपरस्मा इतरे यथाभिप्रेतमस्येयुस्तृतीयेन विध्वोदङ् प्रयायास्तदा चतुर्थमिषुं यां दिशं मन्येथास्तामस्येरवब्रह्मद्विषो जहीति गा दृष्ट्वावतिष्ठेथास्तत्र त्वा विस्रंभयेयुः १३ ब्राह्मणमुक्त्वेमं हिङ्कारवेलायां कारयेयुः १४

इति द्राह्यायणश्रौतसूत्रे दशमे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

भूमिदुन्दुभिमाव्रजेत् १ पश्चादाग्नीध्रीयस्यार्धमन्तर्वेदि श्वभ्रस्य खातं स्यादर्धं बहिर्वेदि २ आर्षभेणोत्तरलोम्ना चर्मणा पिहितः स्यात् ३ त्वं वागसि ४ ये नः सत्रे अनिन्दिषुर्दीक्षायां श्रान्त आसिते । अराद्धिं तेभ्यो दुन्दुभे राद्धिमस्मभ्यमावद ॥ इति । परावद द्विषन्तं घोरां वाचं परावदाथास्मभ्यं ꣳ सुमित्र्यां वाचं दुन्दुभे कल्याणीं कीर्तिमावदेति । परावद द्विषतो वाद्यं दुर्हार्दो यो विषूकुहोऽथास्मभ्यं पुष्टिꣳराद्धिं श्रियमावद दुन्दुभे इत्येनमेतैर्मन्त्रैः पृथगाहत्य बालधानेन ४ अन्यं वा घ्नन्तमनुमन्त्रयेत ५ अप उपस्पृश्य यथैतं प्रत्याव्रज्य पश्चात्तिष्ठन्तोऽग्निमुपतिष्ठेरन्नमस्ते गायत्राय यत्ते पुरो यत्ते शिरो नमस्ते रथन्तराय यत्ते दक्षिणतो यत्ते दक्षिणः पक्षो नमस्ते बृहते यत्ते उत्तरतो यत्त उत्तरः पक्षो नमस्ते यज्ञायज्ञीयाय यत्ते पश्चाद्यत्ते पुच्छं नमस्ते वामदेव्याय यस्त आत्मा यत्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम् ६ अथ सर्वं समस्तेन तस्मैते सुभोः सुभुवो भूयास्म । नामासि नाम भूयासम् । आविरस्याविर्मा कुरु । सवितः प्रमा सुव । यां मनुष्याणां भूतौ संपश्यसि तेष्वभिभूयासम् । श्रियं मयि धेहीति ७ उपस्थाय सदः प्रविशेयुः ८

इति द्राह्यायणश्रौतसूत्रे दशमे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

अपरया द्वारौदुम्बरीमासन्दीं मौञ्जविवानामतिहरेयुः १ यज्ञियस्य वृक्षस्यौदुम्बराभावे २ मुञ्जाभावे दार्भम् ३ तस्य प्रादेशमात्राः पादाः ४ अरत्निमात्राणीतराण्यङ्गानि ५ दक्षिणेनौदुम्बरीꣳहुत्वा तस्या उत्तरतो निदध्युः ६ तामुत्तरेणोद्गाता गत्वा पश्चादुपविश्य भूमिस्पृशोऽस्याः पादान्कृत्वा कूर्चानधस्तादुपोह्याभिमृशेद्बृहद्रथन्तरे ते पूर्वौ पादौ श्यैतनौधसे अपरौ वैरूपवैराजे अनूची शाक्वर रैवते तिरश्ची इत्येतैः पृथगङ्गानि ७ विवयनमालभ्यर्चः प्राञ्च आताना यजूꣳषि तिर्यञ्चः सामान्यास्तरणꣳश्रीरुपबर्हणं वाकोवाक्यमतिलोका वारवन्तीयꣳसंधयो राजनमात्मा प्रतिष्ठा यज्ञायज्ञीयमिति ८ तां मुखेनोरसा बाहुभ्यामिति स्पृष्ट्वारोहेद् वसवस्त्वा गायत्रेण छन्दसारोहन्तु । तानन्वधिरोहामि । राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसारोहन्तु । तानन्वधिरोहामि । वैराज्यायादित्यास्त्वा जागतेन छन्दसारोहन्तु । तानन्वधिरोहामि । स्वाराज्याय विश्वेत्वा देवा आनुष्टुभेन छन्दसारोहन्तु । तानन्वधिरोहामि साम्राज्यायेति ९ अथैतैरेव देवता उदस्य राज्यशब्दं चामुना त्वा छन्दसारोहामीति वैराजपञ्चमैरिति गौतमः १० चतुर्भिरिति धानंजय्यः ११ त्रिभिरिति शाण्डिल्यः १२ आरुह्य जपेत्स्योनामासदꣳसुखदामासदं नमस्तेऽस्तु मा मा हिꣳसीरिति १३ तस्मिन्नारोहति कूर्चानारोहेयुः प्रष्ठी ब्रह्मा गृहपतिः १४ आसन्द्या व्याख्यातं द्रव्यं वाणस्य द्रव्यं वाणस्य १५

इति द्राह्यायणश्रौतसूत्रे दशमे पटले चतुर्थः खण्डः ४

इति द्राह्यायणश्रौतसूत्रे तृतीयः प्रपाठकः समाप्तः ३

## द्वितीयं दशकम् । चतुर्थः प्रपाठकः

### एकादशः पटलः । प्रथमः खण्डः

रोहितेनानुडुहेनोत्तरलोम्ना चर्मणा पिहितः स्यात् १ तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युर्मौञ्ज्यो दार्भ्यो वा २ त्रिष्विति शाण्डिल्यश्चतुस्त्रिंशन्मध्यमे त्रयस्त्रिंशतावभितः इति ३ पुरस्तादेकैकशस्तास्त्रैधं विभज्य भूर्भुवः स्वरित्येताभिः पृथगुत्तरोत्तर्युदूहेत् ४

तमभिमृशेद्वदोवद वदावदी वदो वदोरुः पृथुः सुगः सुगन्त्वः कर्मः करणः करः करस्युरभीषाट् चा भीषाहीचाभिमातिहश्चाभिमातिहा च सासहिश्च सहीयांश्च सहस्वांश्च सहमानाश्चोद्वयाश्च बृहद्वयाश्च सवयाश्च बृहद्वयाश्चैन्द्रीं वाचं बृहतीं विश्वरूपाँ शतायुषीं प्रवद देववाणेति ५ शिथिलाँस्तन्तूनायच्छेत् एभिर्नो वाणतन्तुभिः शतं राद्धीरिहावद । अरात्स्म सर्वेऽतार्ष्म जीवा ज्योतिरशीमहि इति ६ वाक्सर्वं मनो ज्योतिर्मानो भद्र इति जपित्वा वादयेदिन्द्रेणतयेषीकया वेतसशाखया च सपलाशया ७ मूलतो या स्वयं वक्रा सेन्द्रणता ८ प्राणाय त्वेत्यूर्ध्वमुल्लिखेदपानाय त्वेत्यवाञ्चम् ९ व्यानाय त्वेति त्रिः-संल्लिख्योदञ्चं वाणं प्रोहेद्ब्राह्मणमुक्त्वा इममुल्लिखन्नास्वेति १०

इति द्राह्यायणश्रौतसूत्रे एकादशे पटले प्रथमः खण्डः

द्वितीयः खण्डः

आहत दुन्दुभीन् प्रवदन्तु वीणा इति ब्रूयात् १ अलाबुवीणां वक्रकपिशीर्ष्ण्यौ च पूर्वस्यां द्वारि बहिः सदसम् २ वक्रा-कपिशीर्ष्ण्यौ दुन्दुभींश्च प्रतिमन्त्रयेतयो वक्रायां कपिशीर्ष्ण्यां दुन्दुभौ च यच्च वाद्यम् । घोषो यो महतो महाँस्तेन नो राद्धि मावद इति ३ महावीणापिशीलवीणे चापरस्यामन्तरिति गौतमशाण्डिल्यौ बहिरिति धानंजय्यः ४ अलाबुवीणापिशीलवीणे च प्रतिमन्त्रयेता-लाबुवीणापिशीली च यं मन्त्रमधिजग्मतुस्तेनेदमुपगायतां ते साम महयिष्यत इति ५ पश्चिमेनोपगातॄन् द्वे द्वे एकैका पत्नी काण्डवीणां पिच्छोरां च व्यत्यासं वादयेत् ६ उपमुखं पिच्छोरां वादनेन काण्डमयीम् ६ ता अपघाटिला इत्याचक्षते ८ ताः प्रतिमन्त्रयेत यां पत्न्यपघाटिलां मृदुकं वादयिष्यति सारातिमपबाधतां द्विषन्तं तैजनित्वगिति ९ सर्वमनुवीक्षमाणो जपेदाक्रन्दा उलूलयः प्रकोशा यच्च चेष्टति सर्वा सत्रस्य सा राद्धिस्तथेदँसाम गीयत इति १० जपेदेव सुपर्णोऽस्मि गरुत्मान् प्रेमां वाचं वदिष्यामि बहु करिष्यन्तीं बहु करिष्यन्त्स्वर्गमयिष्यन्तीँ स्वर्गमयिष्यन् मामिमान् यजमा-

नानिति ११

इति द्राह्यायणश्रौतसूत्रे एकादशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

ब्राह्मणोऽभिगरः पूर्वस्याँ सदसो द्वारि प्रत्यङ्मुख उपविशेद् वृषलोऽपगरोऽपरस्यां प्राङ्मुखः १ स ब्रूयान्नारात्सुरिमे सत्रिण इति २ अरात्सुरित्यभिगरः ३ दक्षिणेन मार्जालीयमर्योऽन्तर्वेदि दक्षिणामुख-स्तिष्ठेत् ४ बहिर्वेदि शूद्र उदङ्मुखः ५ अर्याभावे यः कश्चार्यो वर्णः ६ तौ श्वेतं परिमण्डलं चर्म व्यायच्छेताम् । शूद्रःपूर्वः ७ पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङ्मुखस्तिष्ठेद्बहिर्वेदि पुंश्चली दक्षीणा-मुखी ८ सा ब्रूयाद्दुश्चरितिन्नवकीर्णिन्निति ९ धिक्त्वा जाल्मि पुंश्चलि ग्रामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रह्मचारी १० एवमातृतीयं व्यत्यासम् ११ सर्वेषां कर्मणि निष्ठिते तदेवाभिगर-स्त्रिर्ब्रूयात् १२ अवसृज्य शूद्रः प्रद्रवेत् १३ तं तेनैवावक्षिणुयात् १४ यथाभिप्रेतमितरां ब्रह्मचार्याक्रोशेत् १५ पश्चिमेनाग्नीध्रीयं बहिर्वेदि परिश्रिते मिथुनौ संभवेतां यौ वर्णौ लभेरन् १६ गृहपतेर्दास्योऽभीष्टा वा नवानुदहरणान्पूरयित्वा प्रदक्षिणं मार्जालीयं परीयुर्हैमहा३इदं मध्विदं मध्विति वदत्यः १७ पञ्चावराध्याः पञ्चशतं पराध्याः पञ्चविंशतिर्वा १८ ताभोऽपि वीणा वादयेयुः १९ सर्वासु स्रक्तिषु दुन्दुभीनाबध्नीयुः २० उत्तरोत्तरि वाचो व्याहरयेयुर्यावतीरधि गच्छे-युः २१ घोषांश्च २२ हिंकारमन्वभिगरप्रभृतयः कृत्वा यथार्थँस्युः २३ आस्तोत्रान्तात्कुम्भिन्यः सर्वे च घोषाः २४

इति द्राह्यायणश्रौतसूत्रे एकादशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

पञ्चविंशे चतुर्विंशस्योत्तमे पर्याये परिचरायामावपेदिति गौतमः १ आवापस्थान इति धानंजय्यः २ प्रथमस्यावापस्थान इति शाण्डिल्यः ३ चतुर्विंशेन वा स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात् ४ स

आस्कन्दो नाम ५ तं न कुर्यादिति शाण्डिल्यायनः ६ उत्तमायाꣳ स्तोत्रीयायां प्रस्तुतायां पादावुपाहरेत् ७ सह निधनेन भूमौ प्रतिष्ठापयेत् ८ आह्रियमाणे भक्षे प्रतिलोमैरारोहणीयैरवरुह्य जपेन्मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्पिपृतां नो भरीमभिरिति ९ अध आसीनाः शेषेण स्तुवीरन् १० उदयनीयेऽतिरात्रे संस्थितेऽवभृथ-मभ्यवेयुः ११ अनुपमज्जन्तः पाणिभिः संधावेरन् १२ यस्यात्र पत्नी स्यात् पृष्ठं तया व्युद्धावयेत् १३ तानुन्नेतोदानयेत् १४ उदेत्य गृहपतिः सोमोपनहनं परिदधीत १५ अहतानि वसनानीतरे १६ अभ्युक्षणप्रभृति समापयेयुः १७ येनेतो गच्छेयुरन्येन प्रत्याव्रजेयुः पाप्मनोऽव्यतिषङ्गाय १८ अनुबन्ध्यवपायां हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूणि वापयेत् १९ तस्मिन् सꣳस्थिते प्राञ्च उदञ्चो वा गत्वा पृथगुदवसनीयाभिरिष्टिभिराहिताग्नयो यजेरन् २० गृहपतिं यजमान-मनाहिताग्नय उपासीरन् २१ तद्देवत्यैः स्थालीपाकैर्यजेरन्निति धानं-जय्यः २२ संवत्सरं संवसेयुः २३ द्वादशरात्रमहोरात्रौ वा २४ यावद्वा सुनुयुर्यावद्वा सुनुयुः २५

इति द्राह्यायणश्रौतसूत्रे एकादशे पटले चतुर्थः खण्डः ४

## द्वादशः पटलः । प्रथमः खण्डः

सर्वत्र ब्रह्मा दक्षिणतः १ उदङ्मुखः कुर्याद्धोमेभ्योऽन्यत् २ पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान् ३ तेषाꣳहोष्यन्त्सुतूष्णीमुपविशेत् ४ हुते यथार्थं स्यात् ५ शूलगवे च बलीन् ह्रियमाणाननुगच्छेत् ६ निधीय-मानानां दक्षिणतः स्थित्वा निहितेष्वप उपस्पृश्यानवेक्षं प्रत्याव्रजेत् ७ तूष्णीं पाकयज्ञे दक्षिणामोमिति वा प्रतिगृह्णीयात् ८ पशुरेव पशोर्दक्षिणा ९ पूर्णपात्रं स्थालीपाकस्य १० उभयोर्यथोत्साहं वा ११ न वितानं पृष्ठतः कुर्वीत १२ येन यज्ञाङ्गेन संयुज्येत तदभ्यावर्तेत १३ कर्मादिषु सर्वेष्वध्वर्युसंप्रैषमागमयेत् १४ पूर्वया च द्वारानादेशे प्रविशेत् १५ अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्राश्यं निर्वप्स्यत्सु तूष्णीमुपविशेत् १६ निरुप्ते यथार्थं स्यात् १७ तदुद्धरिष्यत्स्वेवमेव

१८ तच्चेदनृत्विग्भिः प्राशयेयुस्तण्डुलानादायापविध्येयुर्नेष्टाविद्धं कृतानीति १९ अथान्यान्निदधीरन् २० आधास्यमानस्यारण्योः प्रत्तयोर्यथार्थं स्यात् २१ पूर्वाह्णे दक्षिणेनाग्न्यायतनानि गत्वा यत्राग्निं मन्थिष्यन्तः स्युस्तद्दक्षिणतो निरस्तः परावसुरिति दक्षिणा तृणं निरस्येदावसोः सदने सीदामीत्युपविशेत् २२ भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमिति २३ एतेनोपविशेद्यजुषेति यत्र स्यात् २४ अग्निं ह्रियमाणमनुगच्छेत् २५ निहिते यजुषोपविशेत् २६ अत्र प्रथममिति शाण्डिल्यः २७ द्वितीयमिति धानंजय्यः २८ जाते राथन्तरं गायेत् २९ वामदेव्यं ह्रियमाणे ३० बृहन्निहिते ३१ सर्वाणि तृचेषु मनसा ३२ वाचा गायेदिति ह्युक्ते किमन्यद्वाचा प्रतीयेत ३३ अथापि गानमेवाध्वर्यवे विधीयते न मनसेति ३४ अपि वा रहस्यान्येव मनसा गायेत् । न ह्यरण्ये गेयानां गानं ग्रामे विद्यत इति ३५ प्रथमोत्तमयोः स्थाने वारवन्तीययज्ञायज्ञीय इति लामकायनः ३६ पूर्वे कल्पे भूयाꣳसीति शाण्डिल्यः ३७

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

मन्थिष्यत्स्वरणी आलभ्यारण्योरिति गायेत् १ मथ्यमानेऽग्निं नर इत्येतयोरन्यतरत् २ धूम उदिते त्वेषस्ते धूम ऋण्वतीति ३ प्रज्वलितेऽदर्शि गात्विति ४ निधीयमाने गवां व्रतं यदग्निमीडे इति ५ तान्युद्गातृकर्मैक ६ उद्गाता सामवेदेनेति श्रुतेः ७ यथा विहव्यसजनीयकयाशुभीयानि होतुः ८ प्रस्तोतुश्च वैराजशक्वरी प्रस्तावाः ९ सर्वैश्चाविधानाद्ब्रह्मत्वकारिभिः १० कर्मयोगाच्चोद्गातुश्चत्वारो महर्त्विजः प्राश्नन्तीति हि चातुष्प्राश्यप्राशनम् ११ अधिकारात्तु ब्रह्मणः १२ औद्गात्रे चाविधानात् १३ दृष्टं चानेन सामगानं ब्रह्मा रथचक्रेऽभिगायतीति १४ उद्गातेति यथाभूयसवादः १५ हौत्रे च विधेर्विहव्यादीनि १६ स्तोत्रवत्प्रस्तावा विराट्सु स्तुवन्ति पुरीषेण स्तुवते इति च बहुश्रुतेः १७ अविधानं विधेर्द्वैधात्

१८ यावद्वचनं कर्मयोगः १९ हुतायां पूर्णाहुतौ यथार्थं स्यात् २० अग्नींश्चेदभिजुहुयुस्तत्र गत्वा तूष्णीमुपविशेत् २१ तैर्हुते यथार्थं स्यात् २२ इष्ट्यादिषु सर्वेषु यजुषोपविशेत् पूर्वो यजमानादाहवनीयं प्रति २३ परिध्योर्वा सन्धिम् २४ स्रुचां वाग्राणि २५ उत्करं वा २६ तमन्तरेणाहवनीयं च यजमानस्य संचरो नान्येषाम् २७ तं यदाध्वर्युर्ब्रूयाद् ब्रह्मन्निदं करिष्यामीति सवितृप्रसूतोऽदः कुरु । भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतेनानुमन्त्रयेत २८ एतत्सर्वानुमन्त्रणम् २९ उच्चैरदः कुर्वोमिति ३० प्रणीतासु प्रणीयमानासु वाचं यच्छेदा तासां विमोचनात् ३१ तास्वेव प्रणीयमानास्वा हविष्कृतस्तम्बयजुषश्चाध्या समिधः प्रस्थानीयाया इति वा ३२ यत्र वाध्वर्युब्रह्मचौ चेष्टेताम् ३३ यत्र वा न चेष्टेतां वागयतः प्रायस्त्वेव स्यात् ३४

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले द्वितीयः खण्डः २

तृतीयः खण्डः

प्रायश्चित्तं चेत्कर्त्तव्यँस्याद् भूः स्वाहेतिगार्हपत्ये जुहुयात् । भुवः स्वाहेति दक्षिणाग्नौ आग्नीध्रीये सुत्या चेत् । स्वः स्वाहेत्याहवनीये । भूर्भुवः स्वाहेति तत्रैव १ हुत्वा ब्रूयाच्चेष्टताकार्ष्म प्रायश्चित्तमिति २ अवेलायां चेद्व्याहरेदयज्ञियं वापद्येतैता एव व्याहृतीरनुप्रेक्षेत ३ इदं विष्णुरिति वर्चम् ४ अमावास्यायां दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः ५ तदभावे दार्भे ६ सर्वेष्टिष्विति शाण्डिल्यायनः ७ प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत मित्रस्य त्वा चक्षुषा प्रतिपश्यामीति ८ अप आचम्य देवस्य त्वेति प्रतिगृह्णीयात् ९ व्यूह्य तृणानि पुरस्ताद्दण्डँसादयेत् पृथिव्यास्त्वा नाभौ सादयामीति १० अङ्गुष्ठेनानामिकया चादायाग्नेष्ट्वास्येन प्राश्नामीति प्राश्नीयात् ११ असंखादं निर्गिरेत् १२ अप आचम्योरसि पाणिं निदधीतेन्द्रस्य त्वा जठरे सादयामीति १३ प्रक्षाल्य प्राशित्रहरणं तत्र निदध्यात् १४ यथाहृतं वा प्रतिहारयेत् १५ ब्रह्मभागमाहृतमग्रत उपनिदधीत १६

तमिष्टौ संस्थितायां प्राश्नीयात् १७ अन्वाहार्यमन्तरेण ब्रह्माणं यजमानं च हरेत् १८ स्वयं चेद् ब्रह्मा यजमानः स्यात्पूर्वेणैनम् १९ हृत्वा तमन्तर्वेदि सन्नं तूष्णीमालभेत २० प्रजापतेर्भागोऽसीति वा २१ अथापरं प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान् । अक्षितोऽस्य क्षित्यै त्वा । प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाहि । ऊर्गस्यूर्जं मयि धेहीति २२ तत्रैव यजमानं वाचयेत् प्रजापतिं त्वया समक्षमृध्यासमागम्यान्वाहार्यं ददानि ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वा हुताद्य मा मा हिँसीरहुतो मह्यं शिवो भवेति २३

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले तृतीयः खण्डः ३

## चतुर्थो खण्डः

समिधं प्रस्थानीयामनुमन्त्रयेत देव सवितरेतत्ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमवतेन यज्ञपतिं तेन मामव । मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञँसमिमं दधातु विश्वे देवास इह मादयन्तामित्युपाँशु प्रतिष्ठेत्युच्चैर्भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्युपाँश्वोमित्युच्चैः १ सर्वानुमन्त्रणेन वा २ विमुक्तासु प्रणीतासु समिध आदध्याद्यथावभृथादुदेत्य ३ एतत्सर्वेष्टीनां ब्रह्मत्वम् ४ समानेऽहन्येकासने न पुनर्यजुषोपविशेदिति शाण्डिल्यः ५ अग्न्याधेयेष्टिषु प्रथमायां यजुषोपविशेदुत्तमायाँसमिध आदध्यादिति गौतमः ६ पृथगिष्टिष्विति धानंजय्यः ७ चातुष्प्राश्यं च प्राश्नत्सु ८ धेनुं दद्याद्ब्रह्मणे ९ अध्वर्यवे चाग्निपदम् १० धेनुर्होत्रे वत्सतरीर्ब्रह्मणे अनडुहोऽध्वर्यवे । सर्वे त्रिवर्गाः ११ पष्ठौहीमाग्नीध्राय १२ सर्वेभ्योऽश्वरथं कुण्डले च १३ एवमेव धेनुमग्निपदं चेति शाण्डिल्यः १४ धेनुमनड्वाहं वत्सतरीं वत्सतरमजं पूर्णपात्रमिति तत्प्रथमायामिष्टौ दद्यात् १५ तथोत्तरयोरन्यत्राज्यपूर्णपात्राभ्याम् १६ वरः सप्तमो दक्षिणानां त्रयोदशो वा पञ्चविंशो वा । एतद्वाजसनेयकम् १७ अग्न्याधेयान्तान् कुर्वते पूर्णाहुतिमक्षाभिर्होममिष्टीः १८ मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ

१९ वाजिनाश्विनघर्माणामृत्विक्षूपहमिष्ट्वा प्राणभक्षं भक्षयेत् २० प्रत्यक्षभक्षँस्वे यज्ञे २१ यन्मे रेतः प्रसिच्यते यद्वामेऽपि गच्छति यद्वा जायते पुनस्तेन माशिवमाविश ॥ तेन मा वाजिनं कुरु तस्य ते वाजिपीतस्योपहूतः ॥ उपहूतस्य भक्षयामीति ॥ वाजिनस्येति ॥ ऋतूनां त्वा वाक्षिणां वाजिनं भक्षयामीति वा वोभाभ्यां वोभाभ्यां वा २२

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले चतुर्थः खण्डः ४
चतुर्थः प्रपाठकः समाप्तः ४

पञ्चमः प्रपाठकः । त्रयोदशः पटलः । प्रथमः खण्डः

चातुर्मास्येषु वरुणप्रघासानाँस्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् १ विलिखिते चात्वालेऽध्वर्युणा सह प्रत्याव्रज्याहवनीयमुपविशेत् २ अग्नी प्रणीयमानौ यथैतमनुगच्छेत् ३ अध्वर्युश्चेद्ब्रूयाद्ब्रह्मन्नेकस्फ्य-योपसंभिन्धीति स्फ्येनाहवनीयात्पाँसूनुपहत्योत्तरस्या वेदेर्दक्षि-णादन्तात्कर्षन्नियात् ४ आवेदिमध्यादेका चेत् ५ प्रोह्य स्फ्यं पश्चि-मेन वेदिं गत्वा निधीयमानयोरग्न्योस्तूष्णीमुपविशेत् ६ एतत्कर्मा-ग्निप्रणयनेषु सर्वेषु ७ अवभृथन्यङ्गं गच्छत्सु पूर्वेणाग्नी चात्वालं च गच्छेत् ८ पश्चिमेन वेदी चालात्वं च स्वे यज्ञे ९ हविर्यज्ञेष्वेष संचर उत्तरेण विहारं कर्मभ्यः १० यथा चात्वाले तथा यूपे शामित्रे च पशौ ११ अवभृथन्यङ्गं प्राप्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयः १२ साकमेधेषु क्षीरोदनस्य यथार्थं प्राश्नीयात् १३ यजमानं ब्रूयात्प्रभूतमन्नं कारय सुहिता अलंकृता भवतेत्यमत्यान् ब्रूहि । वत्सांश्च मातृभिः सह वासयेत १४ पूर्वाह्णेऽध्वर्युः क्षीरौदनमृषभस्य रवथे जुहोति ब्रह्माणमुपवेश्य १५ ऋषभेऽरुवति ब्रह्मैव ब्रूयाज्जुहुधीति १६ तूष्णीं पैतृकयज्ञिकायाँसर्वं कुर्यात् १७ ओमित्येवानुमन्त्रयेत् १८ यज्ञोपवीतप्राचीनावीतयोरध्वर्युमनुविदधीत १९ तस्या हवीँषि निर्वप्स्यत्सु दक्षिणया द्वारा प्रपद्य पश्चात्प्राङ्मुख उपविशेत् २० एवमेव वेदिं गत्वा स्तम्बयजुर्हरिष्यत्सु २१ आज्यभागयोर्हुतयोर्दक्षिणेनाग्निं

परिक्रम्य पुरस्तात् प्रत्यङ्मुख उपविशेद्यजमानश्च २२
इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

हुते ष्विष्टकृति यथेतं प्रत्याव्रज्योपविशेताम् १ प्राशित्रमाहृतमुपघ्रायापविध्येत् २ आज्यं चेत् प्राशित्रभागान् विध्येयुस्तदुपघ्रायाप उपस्पृशेत् ३ इडां च प्रतिगृह्य प्रतिप्रयच्छेत ४ अध्वर्युणा परिषिच्यमाने व्युत्क्रम्य परिषिक्त आहवनीयमुपतिष्ठेरन् ५ दक्षिणेन दक्षिणाग्निमुत्तरेण दक्षिणाग्निꣳस्वे यज्ञे ६ अक्षन्नमीमदन्त हीति प्रथमा । सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्रनूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳअनुयोजा न्विन्द्र ते हरी इति द्वितीया उपोषु शृणुही गिरः इति तृतीया ७ तत एवेक्षमाणा गार्हपत्यम् मनोन्वा हुवामहे नाराशꣳसेन सोमेन । पितॄणां च मन्मभिः । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रतꣳसचेमहि । आ न ए तु मनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक्च सूर्यं दृशेयमिति ८ कया नश्चित्र आभुवद् इत्येकया दक्षिणाग्निम् ९ त्रैयम्बकानामापूपा भवन्त्येककपालाः । तेषां यमध्वर्युराखत्कर उपवपेत्तस्मिन्नप उपस्पृशेयुः शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम संदृशि इति १० आसीतेतरेषाꣳहूयमान इति धानंजय्यः ११ तिष्ठेदिति शाण्डिल्यः १२ हुते तिष्ठन्तो जपेयुः अवाम्ब रुद्रमयक्ष्महव देवं त्र्यम्बकम । यथा नः श्रेयसस्करद्यथा नो वसीयसस्करद्यथा नः पशुमतस्करद्यथा नो व्यवसाययात् । भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजꣳसुगं मेषाय मेष्यै सुभेषजं यथासदिति १३
इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले द्वितीयः खण्डः २

तृतीयः खण्डः

यजमानस्यामात्या एकैकमपूपमादाय त्रिःप्रदक्षिणमग्निं परियुः १ तत्र ब्रह्मा परियञ्जपेदिति धानंजय्यः २ तिष्ठन्निति शाण्डिल्यः ३ त्र्यम्बकं

यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्यो-र्मुक्षीयमामृतात् इति ॥ जामी कुमारी वा या स्यात् पतिकामा सापि परीयात् । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितोमुक्षीय इति ज्ञातीनभिसंकल्पयेत् ४ मामुत इतीष्टम-भिनिर्दिशेदमुष्य गृहादिति ५ एवं त्रिः परीत्योदस्येयुः ६ तेषां ब्रह्मैकं लिप्सित्वा यस्य स स्यात्तस्मै प्रयच्छेत् ७ तस्य वौवसन्तं पाणा-वालभेत ८ तथैव त्रिः प्रतिपरीयुः ९ यत्रैनानध्वर्युरासजेत्तत्रो-पतिष्ठेरन्नेष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि कृत्तिवासाः पिनाकहस्तोऽवततधन्वोमिति १० आतमितो जपेयुः ११ शं नो देवीरित्यप उपस्पृश्यानपेक्षं प्रत्याव्रजेयुः १२ वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेषु १३ पशूनां यूपाहुतिꣳहोष्यत्सु तूष्णीमुपविशेत् १४ हुतायां यथार्थं स्यात् १५ वपायाꣳहुतायामिदमाप इति चात्वाले मार्जयित्वा पशूनां यथार्थꣳस्यात् १६ पुरोडाशेन चरिष्यत्सु तूष्णी-मुपविशेत् १७ आहृतं पुरोडाशमालभ्य ब्रूयात् प्राश्नन्तु ये प्राशिष्यन्त इति १८ अनुव्रजेत्सर्वपशूनां पत्नीसंयाजानिति गौतमः १९ सवनी-यस्यैवेति धानंजय्यः २० न सवनीयस्य च नेति शाण्डिल्यः २१ हृदयशूलोऽत्रावभृथन्यङ्गस्थाने भवति २२ तस्मिन्नप उपस्पृशेयुः धाम्नो धाम्नो राजꣳस्ततो वरुण नो मुञ्च । यदापो अघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च द्विष्मः इति २३

इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले तृतीयः खण्डः

## चतुर्थः खण्डः

अभ्युक्षणप्रभृत्यत ऊर्ध्वम् १ आदित्यं नोपतिष्ठेरन् २ पूर्णाहुतौ हूयमानायामासित्वा हुतायां यथार्थꣳस्यात् ३ सक्तुहोमाꣳश्चेज्जुहु-युरासीता तेषाꣳहोमात् ४ सौत्रामण्याꣳसुराकर्मस्वाव्राजमासीत ५ तत्र द्वावग्नी अतिप्रणयन्ति तयोर्दक्षिणत आसीत् ६ दक्षिणमध्यधि कुम्भ्यामासक्तायां शतातृण्णायाꣳसुराशेषेष्वासिच्यमानेषूपतिष्ठेरन्

यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि मे इति ७ अश्विनोर्ग्रहस्य भक्षयेद्यमश्विनानमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियेण । इमं तꣳशुक्रं मधुमन्तमिन्दुꣳसोमꣳराजानमिह भक्षयामि इति ८ यजमानं चेद्ब्रसातिशेषेणाभिषिञ्चेयुरुपोत्थायान्तरेणाग्नी गत्वाध्वर्युणोक्तः सꣳशानानि गायेत् ९ पदाय पदाय स्तोभेत् १० निधनान्युपयन्तो यजमानस्य मूर्धानमालभेरन् ११ सं त्वा हिन्वन्तीत्येतेषां पूर्वः पूर्वः स्तोभ उत्तरमुत्तरं निधनम् १२ श्रवस इति स्थाने जित्या इति क्षत्रियस्य पुष्ट्या इति वैश्यस्ये त्येके १३ द्वे सौत्रामरयौ कौकिली चरकसौत्रामणी च १४ कौकिल्यां सामगानं नेतरस्याꣳसंशानानि गायेदिति ह स्माह कौत्सः १५ सप्त हविर्यज्ञस्य संस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रमणी चेति १६ सप्त सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इत्यप्तोर्याम इति १७

इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले चतुर्थः खराडः ४

## चतुर्दशः पटलः । प्रथमः खराडः

सुत्यायां ब्रह्मणः प्राक्सुब्रह्मरयाया औद्गात्रेण समानं कर्म १ इक्षणाक्रमणे वेदेः २ संचरधिष्ण्योपस्थानदक्षिणाप्रतिग्रहभक्षाः ३ स्तोमविमोचनाच्चोर्ध्वमन्यत् समानम् ४ अनुष्यात्तु दीक्षणीयायाम् ५ तस्याꣳसꣳस्थितायामासीतादीक्षणाद्यजमानस्य ६ तं यदाध्वर्युर्वाचं यमयेदथ यथार्थꣳस्यात् ७ महावीरान्त्सम्भरिष्यत्सु तूष्णीमुपविशेत् ८ सम्भृतेषु यथार्थं स्यात् ९ प्रायणीयायाꣳसꣳस्थितायां पूर्वेण पत्नीशालां तिष्ठेदाभिहोमात्पदस्य राजक्रयरयाः १० अभिहुत उत्तरेण सोमवहनं गत्वा प्राग्वा पदाभिहोमाद्दक्षिणेन यत्र राजानं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुपविशेत् ११ क्रीते प्राङुत्क्रामेत् पश्चिमेनैनꣳ हुत्वा राजानमादध्युराहितं पूर्वेण परीत्योह्यमानमनुगच्छेद्दक्षिणेन चेद्गतः स्यात् १२ उत्तरेण चेत्क्रीते प्रत्यङ्ङुत्क्रामेत् पूर्वेणैनं

हृत्वा राजानमादध्युराहितं पश्चिमेन परीत्योह्यमानमनुगच्छेत् १३ तामेवात्रेषामन्वावर्तेत १४ सा ह्यस्य प्राचि वर्तमानस्य दक्षिणेषा भवति १५ विमुक्ते चान्तरेण सोमवहनं पत्नीशालां च दक्षिणेनोत्क्रम्य तिष्ठेद्दीक्षितश्चेदा राज्ञोऽवहरणात् १६ प्रवेश्यमानꣳराजानमनुप्रविशे-दव्यवयन्नग्निना १७ संबाधश्चेत् स्याद्दक्षिणयापि द्वारा प्रविशेत् १८ उत्तरेणाहवनीयं पश्चिमेन वेदिꣳ संचरेद्दीक्षितश्चेत् १९

इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

आतिथ्यामिष्टिं निर्वपन्ते १ तां चेदनवहृते राजनि निर्वपेरन् ब्राह्मणꣳराजनि समादिश्य तत्र गत्वासीत २ तस्याꣳसꣳस्थितायां तानूनप्त्रमाज्यमवमृशनतो जपेयुर्हविरसि वैश्वानरमनाधृष्टमनाधृष्यं देवानामोजोऽनभिशस्त्यमभिशस्तिपा अनभिशस्त्यन्यमञ्जसा सत्य-मुपगेषꣳसुवितेमाधा इति ३ अप उपस्पृश्याध्वर्युणोक्तो राजानं विस्रम्भयेत् ४ तं हिरण्यमन्तर्धायाभिमृशेयुरꣳशुरꣳशुष्टे देव । सोमाप्यायतामिन्द्रायैकधनविदे । आ तुभ्यमिन्द्रः प्यायतामात्वमि-न्द्राय प्यायस्व । आप्याययास्मान्त्सुखीन् सन्या मेधया । स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति ५ काशमये प्रस्तरे निह्नुवीरन्द-क्षिणान् पाणीनुत्तानान् कृत्वा सव्यान्नीचः एष्टा राय एष्टा वामानि प्रेषे भगायार्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति ६ सुब्रह्मण्या-स्वाहूयमानासु दक्षिणोत्क्रम्य तिष्ठेद्दीक्षितश्चेत् ७ आहूतासु यथार्थं स्यात् ८ उपसदिष्टिरत ऊर्ध्वं तस्यां तथैवाभिमर्शननिह्नवने ९ सव्या अपराह्ण उत्तानाः स्युर्दक्षिणा न्यञ्चः १० स्रुवेणोपसद्धोमे हुते विद्या-त्सꣳस्थितेति ११ तस्या घर्मः प्रवर्ग्यवति पूर्वः १२

इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

तमभीन्धिष्यत्सु गार्हपत्यं गत्वा यजुषोपविशेद्दक्षिणेन १ दक्षिणाग्निमुत्तरेण बहिश्चेत् २ रुचितो घर्म इत्युक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षेरन् यमध्वर्युर्ब्रूयात् ३ तं ह्रियमाणं यथेतमनुव्रजन् जपेद्विश्वा आशा दक्षिणसत्सर्वान् देवानयाडिह । स्वाहा कृतस्य घर्मस्य मेधोः पिबतमश्विना इति ४ आश्रावित उपविश्य जपेदश्विना घर्मं पातं हार्दिवानमहर्दिवाभिरूतिभिः । तन्त्रायिणेन नमो द्यावापृथिवीभ्यामिति ५ हुते यजमानं वाचयेदापातामश्विना घर्ममनु द्यावापृथिवी अमꣳसाताम् । इहैव रातयः सन्त्विति ६ घर्मशेषस्य भक्षयेन्मधु हुतमिन्द्रतमेऽग्नावश्याम ते देव घर्म नमस्तेऽस्तु मा मा हिꣳसीरिति ७ सत्रं चेत्स्याद्यजमाना उपह्वयध्वमित्येवोपह्वानम् ८ एवꣳसदा प्रवर्ग्योपसदः कुर्यात् ९ महावेदेस्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् १० विलिखिते चात्वाले यथार्थं स्यात् ११ उत्तरवेदिं निर्वप्स्यत्सु तूष्णीमुपविशेत् । न्युप्तायां यथार्थꣳस्यात् १२ अग्निचित्यायां प्राग्दीक्षणीयायाः सावित्रान् होमान् होष्यत्सु यजुषोपविशेत् १३ तेषु हुतेषूख्यां मृत्तिकामाह्रियमाणामनुगच्छेत् १४ तस्यां सम्भ्रियमाणायामासित्वा सम्भृतायां यथार्थं स्यात् १५

इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले तृतीयः खण्डः

## चतुर्थः खण्डः

आहवनीयं चेष्यत्सु यजुषोपविशेत् १ तस्मिंत्संचित उख्यामासन्दीं नैर्ऋतीश्चेष्टका अरण्यꣳह्रियमाणा अनुगच्छेत् २ निधीयमानानां दक्षिणतः स्थित्वा निहितास्वप उपस्पृश्यानपेक्षं प्रत्याव्रजेत् ३ अग्निं विक्रन्त्यत्सु सर्वौषधं च वप्स्यत्सु तत्र गत्वा तूष्णीमुपविशेत् ४ तैः सार्धं प्रत्याव्रज्य चितीः प्रणीयमाना अनुगच्छेत् ५ निधीयमानानां दक्षिणतः स्थित्वा निहितासु दक्षिणस्य पक्षस्यासन्नो यजुषोपविशेत् ६ लोकं पृणासूपधीयमानासु ब्राह्मणं तत्र समादिश्य यथार्थं स्यादिति शाण्डिल्यः ७ आसीतैवेति धानंजय्यः ८ एवं सदा चितिषु कुर्य्यात् ९ संचितकर्माणि करिष्यत्स्वाव्राजमासीत १० सम्राडासन्दीꣳह्रिय-

माणामनुगच्छेत् ११ निधीयमानानां दक्षिणतः स्थित्वा परिषिच्यमानेऽप उपस्पृश्य तैः सार्धं प्रत्याव्रज्याग्निं प्रणीयमानमनुगच्छेदप्रतिरथं जपन् १२ तूष्णीमनग्निचित्या चेत् १३ निधीयमानस्य दक्षिणतः स्थित्वा निहिते दक्षिणा बहिर्वेदि यजुषोपविशेत् १४ हविर्धाने प्रवर्त्यमाने अनुगच्छेत् १५ परिवार्यमाणयोस्तत्रैव गत्वासीत १६ उच्छ्रितायामौदुम्बर्यां यथार्थं स्यात् १७ वेदिकर्मप्रभृति वाग्नीषोमप्रणयनात्प्रणयनात् १८

इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले चतुर्थः खण्डः ४

## पञ्चदशः पटलः । प्रथमः खण्डः

अग्नीषोमौ प्रणेष्यत्सु वेदिमाक्रामेन्मन्त्रेण १ पश्चिमेनोत्तरवेदिमुदङ्ङतिक्रम्याक्रमणयजुर्जपेत् २ चात्वालसमीपे दीक्षितश्चेत् ३ तूष्णीमत ऊर्ध्वं वेदेराक्रमणम् ४ क्रीत्वा राजा येनातिहृतः स्यात्तेन गत्वा तूष्णीमुपविशेत् ५ राजानꣳहरेत्युक्तः पूर्वेणाग्निमेकस्मा अतिप्रदाय तान् प्रसव्यं परीत्यादायानुगच्छेद्दक्षिणेन चेद्धृतः स्यात् ६ उत्तरेण चेद्यथेतं परीत्यादायानुगच्छेत् ७ अन्येन चेद्ब्रह्मा व्रजितः स्यादन्येन राजा तेनैनं प्रगृह्णीयात् ८ एतौ त्वेव ब्रह्मणो गतिकल्पावहरतोऽपि ९ आसीताग्नीध्रीय आहुत्योर्हूयमानयोरिति धानंजय्यः १० तिष्ठेदिति शाण्डिल्यः ११ उत्तरेणाग्नीध्रीयꣳराजानमाज्यानि च ह्रियमाणान्यनुगच्छेत् १२ प्रवेशितेषु हविर्धानं पश्चिमेन गत्वासीतेति गौतमः १३ पूर्वेणेति धानंजय्यो दक्षिणस्य द्वारबाहोः पुरस्ताद्यजुषेति १४ अग्नीषोमीयवपायां हुतायां यथेतमुदङ्ङतिक्रम्य चात्वाले मार्जयेत १५ एवमेवापररात्र आज्येषु प्रविष्टेषूपवेशनम् १६ मार्जनं च १७

इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

सवनीयवपायाꣳहुतायाम् १ पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत् २ दीक्षितश्चेत् सर्वा इडा अन्वारभेत ३ वसतीवरीषु परिह्रियमाणासु दक्षिणोत्क्रम्य तिष्ठेददीक्षितश्चेदा तासां परिहरणात् ४ आग्नीध्रीयꣳराजानꣳह्रियमाणमनुगच्छेत् ५ दीक्षितश्चेत्तत्रैव संविशेत् ६ अपरात्र आज्यानि ग्रहीष्यतः पूर्वेण गत्वाग्निं च पश्चिमेन वा यजुषोपविशेत् ७ आत्तेषु प्राङुत्क्रम्य प्रसव्यं परीत्यानुगच्छेत्पूर्वेण चेद्गतः स्यात् ८ पश्चिमेन चेद्यथेतमग्निं परीत्यानुगच्छेत् ९ प्रवेशितेषूपविशेत् १० आज्येष्वेव ग्रहीष्यमाणेष्वत्रोपविशेदिति शाण्डिल्यः ११ अध्वर्यणोक्तो वाचं यच्छेदा तृतीयं प्रातरनुवाकस्य १२ आ वा परिधानीयायाः १३ आ वोपांश्वन्तर्यामयोर्होमात् १४ आ वा बहिष्पवमानात् १५ हविर्धानं चेत् पूर्वेण गतः स्यादुपाꣳश्वन्तर्यामौ होष्यत्सूदङ्ङतिक्रम्य तिष्ठेत् १६ अदीक्षितश्चेदा तयोर्होमात् १७ निःसर्पत्स्वन्वारभेत १८ तस्य प्रस्तोत्रा समानं कर्म प्रागुपवेशनात् १९ आस्तावं प्राप्यानासन्नो यजुषोपविशेत्प्रस्तोतारं प्रति २०

इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले द्वितीयः खण्डः

## तृतीयः खण्डः

रश्मिरसीत्येतावनुवाकौ स्तोमभागाः १ तैः पृथगनुपूर्वꣳस्तोत्राण्यनुमन्त्रयेत ब्रह्मन्त्स्तोष्यामः प्रशस्तरित्युक्ते २ ऊर्ध्वं प्रथमाद्रात्रिपर्यायाद्यत्र स्यादमुष्मै त्वेति तं जिन्वेति तत्र ब्रूयात् ३ सवितृप्रसूता बृहस्पतये स्तुतेत्येकैकस्यान्तः ४ पूर्वेषां च ५ भूर्भुवःस्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतद्वाधिकं कुर्य्यादोंकारं वा ६ यथाम्नायꣳसंधेरनुमन्त्रयेत ७ त्रैधं विभजेदिति धानंजय्यो वसुकोऽसि वस्यष्टिरसि वेषश्रीरसि । वसुकाय त्वा वस्यष्टये त्वा वेषश्रिये त्वा । वसुकं जिन्व वस्यष्टिं जिन्व वेषश्रियं जिन्व । सवितृप्रसूता बृहस्पतये स्तुतेति ८ स्तुतदेवेन सवित्रा प्रसूता इत्यनुमन्त्रयेत मानसं वाजपेये च बृहत् ९ आनन्तर्येणेतराणि १० ईद्ध्रात्स्तोत्राणि पूर्वेण तद्विवृद्धेः ११ परेण वा तन्निकामनात् १२ मानसवद्वातिरिक्त-

सामान्यात् १३ सर्वानुमन्त्रणेन वानुक्तत्वात् १४ यद्यत्स्तोत्रं लुप्येत सहैव स्तोमभागेन १५ स्तुते बहिष्पवमाने वपायां हुतायां मार्जयित्वा धिष्ण्यानुपस्थायोक्तँसदस्युपवेशनम् १६ स्तुतशस्त्रयोर्वाचं यच्छेत् १७ अनूच्यमाने च सर्वत्र १८ वषट्कृते विसृजेत १९ अवभृथादुदेत्यानुष्याद्यज्ञशेषम् २० अहर्गणेष्वेनँ सदातिप्रैषेण प्रशास्ता वाचं यमयति राजानँरक्षेति चाह तदुभयं कुर्यादा वसतीवरीणां परिहरणात् २१ तत्सत्रे पर्यायेण कुर्युरहीने तु ब्रह्मैव २२

इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले तृतीयः खण्डः

## चतुर्थः खण्डः

वाजपेये पृष्ठस्य स्तोत्रमनुमन्त्र्य सदस्यं ब्रह्मासन उपवेश्य निष्क्रामेत् १ पूर्वेणाग्नीध्रीयँस्थूणा निखाता स्यात् २ दक्षिणेन मार्जालीय-मन्तर्वेदीति शाण्डिल्यः ३ तस्यामौदुम्बरँसप्तदशारँ रथचक्रं प्रतिमुक्तं स्यात् ४ तदभावे यत्किंच रथचक्रम् ५ तस्मिन् बाहू आदध्याद्देवस्याहँसवितुः प्रवसे सत्यश्रवसो बृहस्पतेर्वाजिनो वाजजितो वर्षिष्ठमधि नाकँरुहेयमिति ६ रथेष्वाजिं धावत्स्वा-विर्मर्या इति गायेदाकारमुद्गीथादौ लुप्त्वा तस्य स्थाने प्रत्याहृत्य द्व्यक्षरमग्मन्निति ७ गतेषु च ८ यथाधीतमाधावत्सु ९ आसृतेषु वा १० सर्वत्र वा यथाधीतम् ११ परिवर्तयन् गायेत् १२ परिवर्त्य वा गायेद्गीत्वा वा परिवर्तयेत् १३ गायतो वान्यः परिवर्त्तयेत् १८ उदङ्ङवरोहं मन्येत विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णो-र्विक्रान्तमसीति १९ अभि दक्षिणमावृत्य सदः प्रविशेत् १४ उदङ्ङवरोहं मन्येत विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीति १५ अभिदक्षिणमावृत्य सदः प्रविशेत् १६ तत्रासीनो हिरण्यं मधु च नाना प्रतिगृह्णीयात् १७ ऋतपेये च दक्षिणां चमसम् १८ ब्राह्मणाय मधु दद्यान्निदधीत हिरण्यम् १९ त्रिष्टुप्छन्दसा सर्वभक्षं चमसं भक्षयेत् २० तं प्रतिगृह्णीयादिति स्थविरो गौतमः २१

कस्त्वा ददाति स त्वा ददाति कस्मै त्वा ददाति तस्मै त्वा ददाति कस्त्वा कं भक्षयामीति भक्षयेत् २२ वाग्देवी सीमस्य तृप्यत्विति वा २३ उभाभ्यां वोभाभ्यां वा २४

इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले चतुर्थः खण्डः ४

इति पञ्चमः प्रपाठकः

षष्ठः प्रपाठकः

षोडशः पटलः । प्रथमः खण्डः

संतनि चोद्यमानमेकैकस्यां सर्वम् १ स्तोमसंभवात् २ तथा चान्यानि स्वविच्छन्दःसु ३ संतनीति यद्वाहिष्ठीयवत् ४ त्रिषु वा तृचेष्वेकर्च्चवत्तृचे दर्शनात् ५ साम्ना च स्तोमसंख्यानात् ६ तृचेष्वाचार्यस्मृतेर्यथान्यानि सामानि ७ संतानाच्च संतनीति ८ संततं गायतीति चाह ९ एकर्च्चेषु चोद्धृतं कल्पे १० प्रमाणार्थं तृचे दर्शनं ११ स्तोत्रीयायां सामसमाप्तिः १२ तासु सर्वासु प्रस्तावाः स्युर्न्यायप्रगाथधर्माभ्याम् १३ नोत्तरयोराचार्याः । स्मृतेः १४ सन्ततं गायतीति च । भक्तिलोपदर्शनात् १५ तस्य स्तोत्रादावावर्तिषु प्रस्तावः पर्यायादिषु वा १६ सर्वत्र प्रथमायामिति धानंजय्यः १७ निधनभूताः प्रतिहारवत्योऽप्रस्ताव्याः १८ धानंजय्येन प्रथमायां शाण्डिल्य उत्तरे तु स्तोत्रीये विष्टावमुखेष्वेवाप्रस्ताव्ये विष्टावेषु चैकिषु १९ त्रिवृत्स्तोमे च परिवर्तिनीविधानम् २० उत्तरयोः स्तोत्रीययोश्छन्दस्तो विप्रतिपत्तिः २१ द्विपदे स्यातामप्रस्ताव्ये ककुभौ प्रस्ताव्ये २२ बृहत्यौ शाण्डिल्यः २३ ककुभावप्रस्ताव्ये तथा सति २४ उभे ककुभौ स्थविरो गौतमः २५ बृहत्यौ धानंजय्यः २६

इति द्राह्यायणश्रौतसूत्रे षोडशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

आद्याभिर्विष्टुतिभिः स्तोमविधानमनादेशे १ ताः पथ्याः २ सर्वाभिप्रायाश्च ३ यथाशिषं वा विदध्यात् ४ द्वितीयां त्रिवृतः

पथ्यामेके ५ अविष्टावा ह्याद्या ६ संहारशिरःसंधिसंतनिषु चानुपपन्ना ७ अवर्षुकस्त्विति चास्याम् ८ इषोर्व्यत्यासमिषुभ्याम् ९ तयोः पूर्वा श्येनस्याग्निष्टोमसाम्नि १० सत्रेषु दशरात्रे सर्वाः प्रयुञ्जीताभिचरणीया उद्धृत्येति शाण्डिल्यः ११ शाण्डिल्यायनः कुलायिनीम् १२ भस्त्रां चोभौ १३ धानंजय्यस्तामेव १४ पथ्याभिर्होतृषामाणि विदध्यादपथ्याभिरितराणि १६ समाप्तासु ता एवादितः पुनः प्रयुञ्जीत १७ तथा कुर्वन् प्रागाथिकानि परिवर्तिन्या प्रथमस्येति शाण्डिल्यः १८ सकृत्सर्वाः समाप्य पथ्ययैव तत ऊर्ध्वमिति धानंजय्यः १९ असमाप्तासु त्वपि होतृषामपथ्ययैव २० तथा कुर्वन् कुलायिनीं चेत् प्रयुञ्जीत प्रथमस्याह्नो द्वितीयं पृष्ठं तया विदध्यात् २१ षष्ठस्याह्नः उक्थ्यमुत्तममुत्तमया त्रयस्त्रिंशस्य विष्टुत्या विदध्यात् २२ उक्तः प्रयोगो ब्राह्मणेन चतुश्चत्वारिंशे २३ सवनसमीषन्ती पूर्वः प्रयोगः स्तोत्रसमीषन्तीत्युत्तरः २४ तथा कुर्यादहर्भाजि २५ पथ्यामन्यत्र २६ अष्टाचत्वारिंशस्योत्तरया मैत्रावरुणस्याज्यं विदध्यात् २७ सर्वाणि वा होतृकसामानि २८ मध्यमे मध्यमे वा सवनेषु २९ द्वितीयचतुर्थे वा ३० उत्तरे वा ३१ अदशरात्रेषु सत्रेषु पथ्या एवेति गौतमः ३२ सर्वा इति धानंजय्यः ३३

इति द्राह्यायणश्रौतसूत्रे षोडशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

तृचसूक्तानामादिग्रहणेन विधिरनादेशे १ तृचोत्तमायां प्रतिलोमः २ मध्यमायां सैव ३ रेतस्यैकत्रिकस्य बहिष्पवमानम् ४ उद्भिद्यनुरूपमेकर्चं शाण्डिल्यः ५ स्तोत्रीयं गौतमधानञ्जय्यौ ६ उत्तमौ तृचौ बहिष्पवमाने साहस्रोत्तमो चातुर्मास्येषु ७ सर्वे सर्वस्वारे ८ वामदेव्ययज्ञायज्ञीयारण्येगेयपृष्ठपूर्वाणां तृचकरणमुत्तरयोः पवमानयोरन्येषां चाविप्रतिषेधः ९ एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यात् १० द्वौ तस्यामेव ११ त्रीनेकतृचे नानास्तोत्रीयासु १२ चतुर्णां प्रथमायां द्वावितरौ नानोत्तरयोः १३ माध्यंदिने चेदेको द्वौ वा बृहत्यामेव १४

त्रीन्यतरस्यां संभवेयुः १५ अनध्यासा चेद् द्वयोरन्यतरं गायत्र्यां धानंजय्यः १६ उभौ बृहत्यां शाण्डिल्यः १७ साध्यासायां चेदेकोऽध्यास्यायामेवान्ततः १८ द्वौ तस्यां चैवादितश्च १९ सा शशकर्णक्लृप्ता २० त्रिष्वध्यास्या लुप्येत २१ तृचे वा २२ चतुरो नाना स्तोत्रीयासु २३ आर्भवे चेदेकोऽनुष्टुभि २४ द्वि प्रभृतीन् ककुप्प्रभृत्यानन्तर्य्येण २५ उष्णिक्ककुभोस्तृचैकर्च्चत्वमव्याघातेन २६

इति द्राह्यायणश्रौतसूत्रे षोडशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

वामदेव्यं तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीयप्रभृतीनि च त्रीणि १ संभवति स्तोमेऽन्त्यं सर्वत्र तृचे २ द्वितीयं चेदरण्येगेयम् ३ तदभावे यदन्त्यात् पूर्वम् ४ एकर्च्चस्थानेष्वनापद्यमानानि तृचेषु कुर्यात् गायत्रं त्रिणिधनं मध्यंदिने मध्येनिधनमैडमार्भवे ५ अनादिष्टतृचैकर्चा-न्येतेनोद्देशेन कल्पयेत् ६ ककुब्यत्र मध्यंदिन एकर्च्चस्तस्यामन्य-त्रोत्तमाद् व्रात्यस्तोमात् ७ द्विपदा ककुब्वत् तत्स्थाने ८ पूर्वयोर्व्रात्यस्तोमयोरार्भवे गायत्रमेकर्च्चे धानंजय्यस्तृचे मरुतां संस्तो-भम् ९ विपरीतं शाण्डिल्यः १० चतुर्ऋचानामावृत्तिष्वन्त्यामुद्धरेत् ११ तृतीयां सर्वस्वारस्वरसाम्नोः १२ प्रवामर्च्चन्तीति द्वितीयाम् १३ सुषमिद्ध इत्यत्रिवसिष्ठ-शुनककण्वसंकृतिवादयश्वानां तानूनपातीम् १४ नाराशंसीमन्येषाम् १५ समवाये तु भूयसां कल्पः १६ गृहपतेर्वा प्राधान्यात् प्राधान्यात् १७

इति द्राह्यायणश्रौतसूत्रे षोडशे पटले चतुर्थः खण्डः ४

## सप्तदशः पटलः । प्रथमः खण्डः

वर्द्धमानेषु स्तोमेषु १ प्रथमस्य पर्यायस्य प्रथमा तृचभागा । तस्यास्त्रिर्वचनम् २ मध्यमावापस्थानम् ३ उत्तमा परिचरा ४ परिचरा तृचभागावापस्थानमिति मध्यमे ५ आवापस्थानं परिचरा तृचभागेत्युत्तमे ६ एते विष्टावाः ७ तदभावे तृचभागास्थानेषु

पर्यायाणां पर्यायाः स्युः ८ यथा वैकः पर्यायः ९ नैकिनि पर्याया विद्यन्ते । तथा त्रिके विष्टावाः १० त्रिवृतश्चोद्यत्याम् ११ समेषु समः प्रयोगः स्तोत्रीयाणाम् १२ एकैकाधिशयेष्वधिका द्वे द्व्यधिशयेषु १३ ते विषमाः १४ युग्मायुक्ता द्व्युत्तरीभावेण १५ अयुज एकिप्रभृतयः १६ द्विकप्रभृतयो युजः १७ त्र्युत्तरीभावेनोभयेषां समवैषम्यम् १८ एकिप्रभृतय एकाधिशयाः १९ द्विकप्रभृतयो द्व्यधिशयाः २० समास्त्रिकप्रभृतयः २१ विषमाः समपर्यायैर्वर्तन्ते २२ यावभितोऽनन्तरौ समौ तयोः पर्यायान् संहरेत् २३ पूर्वस्यैकमेकाधिशयेषु २४ द्वौ द्व्यधिशयेषु २५ उभयान् यथाजाति २६ युग्मायुग्भ्यो वा २७ तत्र युजामेकाधिशयानामयुजः पूर्वौ पर्यायौ २८ उत्तरौ द्व्यधिशयानाम् २९ विपर्ययो युग्मायुजामयुग्नु ३०

इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

त्रिणवाद्यावत्समाः १ एकया द्वाभ्यां वा परौ ज्यायांसौ २ अन्त्यो वा ३ अन्यत्र त्वेव ४ संहरन्त्येके ५ यथास्थानं पर्यायान् कुर्यात् ६ सोऽविदोषः ७ यदवसानः पूर्वः पर्यायस्तत्प्रभृतिरुत्तरस्तत्सामात्साम्यम् ८ तदुभयं कुर्यात् ९ ब्रह्मायतनीयां च १० तथा पर्यायरोहम् ११ असंभवत्सु सर्वेषु समात्समामेव चिकीर्षेत् १२ पर्यायप्रत्यवरोहं तु वर्जयेत् १३ विडायतनीयां च १४ प्रथमायाः प्रयोगे भूयिष्ठे ब्रह्मायतनीया १५ मध्यमायाः क्षत्त्रायतनीया १६ उत्तमाया विडायतनीया १६ दाशरात्रिकेभ्यः पर्यायकृतौ पथ्यापर्यायानेव संहरेत् १८ परिवर्तिन्यास्तु त्रिवृतोऽनादेशे १९ एष न्यायोऽनादिष्टानाम् २० एकिन्यावर्तिस्थानगते त्रिः पुरस्ताद्धिंकारं शाण्डिल्यः २१ त्रिके च प्रथमया स्तोमपूरणम् २२ तृचेन धानंजय्यः २३ सकृच्चैकिनि हिंकारम् २४ जातिसंहारः पञ्चिनि २५ पञ्चदशपर्यायैः पृथगनुपूर्वं रात्रिपर्यायान्निदध्यात् २६

इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले द्वितीयः खण्डः

## तृतीयः खण्डः

संलङ्घितायामिति भाडितायनः १ तत्र विष्टावाः पर्यायस्थानेषु स्युः २ पृथक् च स्तोत्रीयासु पर्यायाः ३ दाशरात्रिकेभ्य एकया ज्यायस्सु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत् ४ ब्रह्मायतनीया तु तेषु ५ क्षत्रायतनीया वा ६ आस्कन्दं तु गौतमश्चत्वारिंशे ७ धानंजय्य इतरेषु ८ दशिनि चतुष्को मध्ये परिवर्त्तिनी पर्यायावभितः ९ उद्यत्या वा १० उद्यतीपर्याययोर्ब्रह्मायतनीयां कुर्वन् प्रथमायां चतुष्कं कुर्यात् ११ द्वादशे तृचभागास्थानेषु द्विका विष्टावा आवापस्थानेषु वा १२ त्रयोदशत्रयोविंशयोः पञ्चविंशे च मध्यमः पर्यायो ज्यायानेकज्यायःसु कनीयानेककनीयःसु १३ तथैकान्नत्रिंशैकत्रिंशयोः १४ रूढपर्याया वा १५ तेषां प्रथमे युग्मायुक्संहारं शाण्डिल्यायनः १६ द्वितीये शाण्डिल्यः १७ उभयोर्जातिसंहारं धानंजय्यः १८ शाण्डिल्यस्तु पञ्चविंशे १९ अष्टादशः सप्तदश एवावपेदिति गौतमः २० न्यायविहितः स्यादिति धानंजय्यः २१ एकान्नविंशे च परिवर्तिनीपर्यायावभितस्त्रयोदशी मध्ये २२ तस्मिन् प्रथमायास्त्रिर्वचनं तथोत्तमायाः २३ पञ्चदशपर्यायावभितो नवी मध्ये त्रिकविष्टाव इति शाण्डिल्यः २४ शाण्डिल्यायनस्तु जातिसंहारम् २५ द्वात्रिंशे तिस्रो विष्टुतीः कुर्यादिति धानंजय्यः २६ तासां पर्यायकृतिप्रयोगौ चतुश्चत्वारिंशेन व्याख्यातौ २७ अप्यहर्भाजि प्रथमयैवेति शाण्डिल्यः २८

इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

चतुष्टोमयोश्चतुष्पर्यायाः १ तत्र चतुष्के द्वौ प्रथमायां पर्यायौ स्यातां यदि ब्रह्मायतनीयां कुर्यात् २ मध्यमायां क्षत्रायतनीयां चेत् ३ तथाष्टिनि ४ द्विकास्तु तस्य पर्यायाः ५ पूर्वयोः पूर्व उत्तरयोरुत्तर एवं विहितावपराविति शाण्डिल्यः ६ पूर्वयोर्द्वितीयः पृथक्स्तोत्रीया-

स्वितर इति धानंजय्यः ७ द्वादशे व्याख्यातौ प्रथमोत्तमौ ८ मध्यमौ द्विकौ ९ पूर्वयोः पूर्व उत्तरयोरुत्तरः १० षोडशे चत्वारो द्वादशपर्यायाः ११ तेषां मध्यमौ सदृशौ १२ चतुर्विंशे चत्वारः षट्काः पर्याया द्विका विष्टावाः १३ पृथक्तृचेषु तु चतुस्तृचे १४ द्वयोर्द्वयोर्वा द्वैधम् १५ यज्ञायज्ञीयस्यर्क्षु वा प्रथमः प्रथमासु च १६ यज्ञायज्ञीयप्रथमायां द्वितीयः साकमश्वर्क्षु परमध्यमयोश्च १७ पूर्वमध्यमयोस्तृतीयो हारि-वर्णर्क्षु तैरश्चयोत्तमायां च १८ पूर्वोत्तमासु चतुर्थस्तैरश्चयर्क्षु च १९ उपोत्तमो वा द्विकवि-ष्टावोऽश्वमेधेऽष्टादशादितरे २० पञ्चदशस्य पर्यायौ पूर्वावेकविंशस्योत्तराविति वोत्तराविति २१

इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले चतुर्थः खण्डः ४

## अष्टादशः पटलः । प्रथमः खण्डः

छन्दोदैवतसामान्तयोगान्न्याय्यान् ब्रुवते यथा षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य १ उक्थोत्तमेऽनुष्टभो न्याय्याः २ विच्छन्दसस्तु वचनात् ३ यद्देवत्यासु स्तुवते सा स्तोत्रदेवता ४ अन्वध्यायम-पवादनिशामनम् ५ स्वाराणि हाइकारस्वाराणि पदानुस्वाराणि च ६ तेभ्योऽन्यान्यैडवाङ्गिनधनेभ्यश्च निधनवन्ति ७ सर्वेषां तुल्या-न्तसंनिपाते जामि ८ वाचोऽन्यत्र ९ तन्न कुर्यादनादेशे १० दशरात्रात् षाडहिकान्यष्टमनवमयोश्चैतान्यहीनतन्त्राणि ११ ज्योतिषश्च गोश्चैका-हिके तन्त्रे १२ तयोः समास उभयफलकम् १३ कल्पसप्रायाणि ऋक्सामानि यत्र समवयन्ति तदाशीस्तन्त्रं यदाभिचरणीयेषु १४ भूयिष्ठं तन्त्रलक्षणम् १५ उत्तरयोः सवनमुखीये गायत्राविति शौचि वृक्षिः १६ मध्यंदिनीया त्वाचार्याणाम् १७ द्विरात्रप्रभृतिष्वहीनेषु प्राक् षडहेभ्योऽन्त्यमन्त्यमैकाहिकमिति राणायनीपुत्रः १८ सर्वा-ण्याहीनिकानीति वैय्याघ्रपद्यः १९ अहीनैकाहसमासं तु लामकायनः २०

इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

अथ साम्नां पञ्चधाकारः १ प्रस्तावोद्गीथौ प्रतिहारोपद्रवौ निधनमन्तः २ तत्सर्वे श्रुतिसामर्थ्यात् ३ गायत्रे तु विकल्पः सर्वे वोद्गाता वा ४ सप्तधाकारमप्येके वचनात् ५ हिंकारः प्रस्तावात् पूर्वः ६ उद्गीथादोंकारः ७ चतुष्टयानि सामानि विषमभक्तीनि पदसस्तोभ-स्तोभविभाग्यानि यथा प्रवद्धार्गवं महावैश्वामित्रं सौमित्रम् ८ अवसानं प्रस्तावान्तलक्षणमविभाग्यानाम् ९ द्व्यवसानः पूर्वे वार-वन्तीये १० पूर्वेण वा ११ चतुरक्षरो वाजभृत्कार्णश्रवसाजिगानाम् १२ सुरूपयोश्च १३ पदं वाजिगप्रभृतीनाम् १४ एडेऽर्धं साकमश्वे १५ शौक्ते च १६ स्तोभान्त आभीशवयोः १७ अभ्यस्तेनोत्तरस्य १८ हाउकारान्तश्चयावने १९ वाग्वाम्रे २० षोडशाक्षरो नानदस्य २१ तथा गोशृङ्गसंजययोः २२ यच्च रात्र्यां दैवोदासम् २३ षट्त्रिंशदक्षर ऋषभस्य रैवतस्य २४ सर्वेषामोङ्कारेणोद्गीथादानम् २५ प्रथमाक्षरलोपं तु धानंजय्योऽलोपं शाण्डिल्यः २६

इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

प्रस्तुतं वै सामावसीदति तदुद्गातोङ्कारेणोत्तभ्नातीति ब्राह्मणम् १ स्वरादिषु वा तमेव स्वरमोङ्कारीकुर्यादागन्तुमोङ्कारं व्यञ्जनादिषु २ प्रत्यवेतस्वरेषु ३ प्रत्यक्षपरोक्षिप्रचिरन्यस्तोढात्तकृष्टाकृष्टानां येन संस्वरेत्तत्कुर्यात् ४ सर्वं तु लघीयसाऽमात्रालोपेन ५ पदादिः प्रतिहारस्थानं सर्वत्र ६ पदानिर्देशे चोत्तमे पदे ७ संख्याविषये चाक्षराधिकारः ८ अन्तःप्रतिहारं स्तोभान् प्रतिहर्ता ब्रूयात् ९ ऊर्ध्वं चार्चिकाव्यपेतान् १० अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र पङ्क्तिभ्यः ११ तस्मिन्नयाय्यसंज्ञा १२ पदान्तमविशेषे चोपोत्तमात्पदात्प्रतीयात् १३ एष न्यायोऽनादेशे १४ सौमेधस्यौर्णायवयोर्ऋषभस्य पावमानस्य निधनस्य मार्गीयवस्यैतेषामुपरिष्टात्प्रतिहारस्योद्गाता स्तोभं भजते १५ न्याय्यप्रतिहाराणामिडानां संक्षाराश्वसूक्तैडस्वरवार्षाहरस्वारकौत्सानां गोराङ्गिरसस्य साम्नोऽभ्यासवतश्च क्रौञ्चस्याग्निमीयामस्यैतेषां पुरस्तात्

प्रतिहर्ता १६ संहितमार्षर्भं शाकलं वाजदावर्यः स्वारं सौमित्रं पदनिधने काराववरोहितकूलीये १७

इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले तृतीयः खराडः ३

चतुर्थः खराडः

यौक्ताश्वे सौपर्णानामुत्तरे यौधाजयं नौधसमाष्कारनिधनं कारावं यौक्तस्त्रुचं वाम्रं तीरश्चीनिधनमायास्यमिन्द्रस्ययशो वैष्णवमुत्तरं सफं प्रमंहिष्ठीयं दीर्घं पौष्कलमान्धीगवं बृहदाग्नेयं श्यावाश्वत्रैशोके तेषां द्वे १ पुरस्तात्स्तोभो यौक्ताश्वयोः पूर्वस्य २ श्यावाश्वत्रैशोकयोः पदान्तः ३ अस्तोभस्तु श्यावाश्वस्य ४ पदान्तो वाम्रे न्याय्यो वा ५ ओंकारादिस्तृतीयचतुर्थाभ्यां विशोविशीये ६ हिंकारादिर्वा पञ्चम-षष्ठाभ्याम् ७ शौक्तनार्मेधे द्विप्रतिहारे ८ प्रथमनवमाभ्यां शौक्तस्य ९ पदान्तश्चतुर्भिः पूर्वो नार्मेधस्य चतुर्भिरेव मध्यमैरुत्तरः १० एक-प्रतिहारं वोत्तरेण ११ भासवैरूपयोर्गायत्रीसाम्नोः पदान्तः १२ द्वाभ्यां भासे १३ चतुर्भिरुत्तरस्य १४ तृतीयेन पदेन यज्ञायज्ञीयनिधने सौहविषे १५ श्रायन्तीयवरुणसामद्वैगताञ्जसा दश १६ तेषां पूर्वयोः सर्वं पदं द्वे च पुनरुक्तस्य १७ द्वैगते तु पदान्तः १८ उपोत्तमस्य पदस्य पदादिरञ्जसः १९ विशोविशीयप्रभृतीनां वा नवानामुत्तमस्य पदस्यादौ द्वे २० हाइकारान्तो विशोविशीये २१ श्रायन्तीयवरुण-साम्नोरभ्यासादिः २२ चत्वारि वा प्राग्घिंकारात् प्राग्घिंकारात् २३

इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले चतुर्थः खराडः ४

इति द्राह्यायणश्रौतसूत्रे षष्ठः प्रपाठकः समाप्तः ६

सप्तमः प्रपाठकः । एकोनविंशः पटलः । प्रथमः खराडः

वामदेव्यं स्वारं साकमश्वं पाष्ठौहं निधनकामं सत्रासाहीयं काक्षीवतं च्यावनं गायत्रीसामौशनं निधनवदैध्मवाहम् तेषां पञ्चमषष्ठे विकल्प्येते न्याय्येन १ गूर्दः सौमेधं माधुच्छन्दसमौदलं सौश्रवस-मुत्तरं वार्त्रतुरमृषभो रैवतः कौत्समौष्णिहमातीषादीयं क्रोशमो-

कोनिधनं स्वारं सामराजं मारुतमौष्णिहमाद्वारं सुज्ञानं हारिवर्णं सांवर्त्तं जागतं वरुणसाम मरुतांधेनु स्त्रौग्मतम् । तेषां चत्वारि २ अभ्यासो गूर्दस्य ३ अभ्यासादिरुत्तरेषां त्रयाणाम् ४ उत्तमानि सौश्रवसे ५ अष्टौ वा वार्त्रतुरे ६ पूर्वयोश्च न्याय्यौ ७ मध्यमं वचनमृषभे ८ मध्यमान्युत्तरेषां पञ्चानाम् ९ प्राग्वाभ्यासादुत्तमानि कौत्से १० प्रथमानि वा सामराजस्य पुरस्तात्स्तोभः ११ षड्वा पञ्चमप्रभृतीनि मारते १२ आश्वरथन्तरयोः पञ्च १३ वैदन्वते चाभ्यासवति १४ उत्तमे तु पदान्तस्तस्य १५ आदौ वा द्वे उभयतः-स्तोभे १६ तृतीयं वा १७ उभौ वैकः १८

इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

आकूपारक्रौञ्चे गायत्रीसामनी दैवातिथं गौषूक्तं रौरवं द्विहिंकारं वामदेव्यमेकारान्तःप्रस्तावं वैयश्वमरण्येगेयं शाक्वरवर्णं सौभरं बार्हद्गिररायोवाजीये स्वारमैध्मवाहं गौशृङ्गं हारायणकौल्मलबर्हिषे जनित्रमुत्तरं वैतहव्यमिहवद्वामदेव्यं प्रतीचीनेडं काशीतं वैष्णवं पूर्वं श्यैतं संजयम् । तेषां षट् १ अस्तोभावुत्तमयोः २ प्रथम-तृतीययोरुभयतःस्तोभौ ३ प्रागौकारात्प्रथमे ४ हिंकारात्तृतीये ५ अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्य ६ इहकारान्त ऐध्मवाहे स्तोभः ७ सर्वो वा ८ प्रागोवायास्त्रिषूत्तरेषु ९ पैरुमद्गे च १० ओकाराज्जनित्रे ११ सह वौवया पौरुमद्गे १२ गौशृङ्गहारायणकौल्मलबर्हिषवैत-हव्यानां वा पदान्तः १३ द्वाभ्यां पूर्वयोश्चतुरुत्तरयोः १४ पुरस्ता-त्स्तोभः कौल्मलबर्हिषस्य १५

इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले द्वितीयः खण्डः

## तृतीयः खण्डः

सप्त वारवन्तीये पूर्वस्मिन् । तेषां त्रीणि पदान्ते १ कार्षश्रवसं त्रैतं पज्रं तौरश्रवसमुत्तरं श्रुध्यमुद्वंशपुत्रः शाक्वरम् । तेषामष्टौ २ पज्रतौ-

रश्रवसयोरर्द्धानि पदान्ते ३ श्रुध्यस्य च ककुप्सु ४ तस्य गायत्रीषु चत्वारि ५ षोडश बृहतीषु ६ नदं व श्रोदतीनामिति दश ७ मध्यमस्य पदस्याभ्यासः शाक्वरे ८ न्याय्यो वा ९ वायोरभिक्रन्दः स्वारं कावमौरुक्षयमौशनश्यावाश्वे त्रैष्टुभे श्नौष्टं जागतं सोमसाम कार्तयशं स्वारं पयोनिधनमृषभः शाक्वरो यण्वापत्ये । तेषामुत्तमं पदम् १० पुरस्तात्स्तोभा उत्तमानां त्रयाणाम् ११ अप्रतिहारा प्रथमा स्तोत्रीया यण्वापत्ययोः १२ पञ्चानां वादित उत्तमे पदे चत्वारि १३ वैखानसं पौरुहन्मनमुद्वंशीयमाष्कारणिधनं त्वाष्ट्रीसाम । तेषामुत्तमं पदं प्रागभ्यासात् १४ अभ्यासे वा चत्वार्युत्तरयोः १५

इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

शाक्त्यसाम मैधातिथं वारवन्तीयमुत्तरमाभीशवे सिमानां निषेध-स्त्रिणिधने त्वाष्ट्रीसामायास्ये दार्ढच्युतमाथर्वणं रेवत्य ऐटतमग्ने-स्त्रिणिधनमुत्सेधनिषेधावैडं साकमश्वं दैर्घश्रवसं दाशस्पत्यं ग्रामेगेयश्येनः । तानि द्विप्रतिहाराणि १ मध्यमयोः पदयोः शाक्त्य-साममैधातिथयोः पदान्तो द्वाभ्याम् २ चतुर्भिर्वा ३ इहाहे वारवन्तीये ४ सप्तभिर्वैकप्रतिहारं प्रागिहाहायाः ५ उकारादिर्वैकेन पदान्तः ६ न्याय्यो वा ७ पूर्वयोश्च ८ वारवन्तीयस्य द्विपदासु सप्तानां स्थाने चत्वारि ९ द्वे चतुर्णाम् १० द्वे एकमित्येकपदायाम् ११ उत्तरयोः पदयोरुत्तरेषाम् १२ द्वे द्वे तु षण्णामाभीशव प्रभृतीनाम् १३ चत्वारि वा सिमानां निषेधस्य त्वाष्ट्रीसाम्नश्च १४ पुरस्तात्स्तोभा वाथर्वणस्य १५ तत्प्रभृतीनां चत्वारि १६ अष्टौ वा दाशस्यत्ये १७ पूर्वे वोत्तरेणैकप्रतिहारे १८ तृतीयपञ्चमाभ्यां पदाभ्यां श्येने १९ चतुर्थषष्ठयोर्वा पदयोर्द्वे पदयोर्द्वे २०

इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले चतुर्थः खण्डः ४

## विंशः पटलः । प्रथमः खण्डः

पृथक्स्तोत्रीयासु प्रतिहाराः संतनिनः १ त्रयस्त्रय ऊधःसु महानाम्नीनाम् २ तान् प्रतितोदा इत्याचक्षते ३ तथा स्वराश्च नित्यवत्सातीषङ्गयोः ४ द्वे द्वे तु सर्वेषाम् ५ षड्वा संतनिवर्जम् ६ शाक्वरोत्तमेषु महानाम्नीनाम् ७ षष्ठमध्यायेषु ८ आन्धास्वरं मध्यमं वचनं स्तौत्रिकं पुरीषेषु ९ अप्रतिहाराण्यध्यासपुरीषपदान्याचार्याः १० तासां प्रथमद्वितीये पदे द्विपदा ११ त्रीणि शाक्वराणि १२ धातुर्वत्स ऊधः १३ तच्छाक्वरम् १४ पुरुषस्त्रीणि शाक्वराण्यध्यास्या १५ इति पदानि १६ उत्तमा तु द्व्यध्यासा १७ द्विपदासु प्रस्तावः शाक्वरप्रथमेष्वध्यासपुरीषपदेषु च १८ भासेनोक्तः पदान्तो यज्ञायज्ञीये देवस्थाने वैरूपेण १९ अरण्येगेयः श्येनः पार्थुरश्माच्छिद्ररयिष्ठे । तेषामुत्तरेषु पदेषु २० द्वे द्वे पूर्वयोः २१ चत्वारि चत्वार्युत्तरयोः २२ उभयतः स्तोभाः पार्थुरश्मस्य २३ देवतापदं देवतापदमिति वैरूपे निधनानि २४ प्राक्शिशुमत्याः स्तोभैः प्रतिहारः २५ एकादशमैडे दैवोदासे २६ सप्तमाष्टमाभ्यां त्रैककुभस्य २७ नवमदशमाभ्यां वैश्वमनसस्य २८ तथा वृष्णः २९ त्रिरुक्ताभ्यां तु तस्याभ्यासाद्यैः ३० सदृशगीतिषु सर्वेषु पृथक्पृथक्पदानि विभजेरन् । प्रत्यन्तादनादेशे । शेषमुद्गाता तानि विभाग्यानि ३१ त्रैष्टुभजागतान्यनादिष्टानि ३२ बह्वक्षरस्तोभादीनि च रहस्येषु ३३ यथा वसिष्ठस्य वैराजं वषट्कारणिधनमाष्टादंष्ट्रे महावैश्वमित्रं सौमित्रं स्वर्णिधनं दैवोदासमैडं वैदन्वतं प्लवः परीतोयोनीनि क्रौञ्चं त्वाष्ट्रीसामानि स्वारंवाङ्निधनान्यभ्यासवदाकूपारम् ३४ आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत् । यो यः पदं ब्रूयात्तथानुपदं स्तुब्धेषु ३५

इति द्राह्यायणश्रौतसूत्रे विंशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

ऊर्ध्वं तु प्रथमात्पदात्संकृतिनः १ प्राक्चतुर्थात्पदात्स्तोभैः प्रतिहारः २ निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि स्तोभ-

विभाग्यानि ३ तत्र तृतीयायैव पदाय प्रतिहर्ता स्तोभेत् ४ उपायवन्तः स्तोभा एकवृषस्य ५ देवतासु चर्षभस्य शाक्वरस्य ६ तासां नानास्तोभेयुः ७ सदेवते पदे प्रस्तावप्रतिहारौ विभाग्यश्चेत् ८ गायत्रीसामसु विभाग्येषूत्तमे व्यावर्गं शिष्ट्वा प्रतिहरेदिति धानंजय्यः ९ सर्वेणैव पदेनेति शाण्डिल्यायनः १० त्रिरुक्तान् स्तोभाञ्छुक्रियेषु चतुर्ब्रूयुरन्यत्र निधनेभ्यः ११ महादिवाकीर्त्यस्य प्रास्ताविके देवते विपरिहरेत् १२ एवं ज्योतिष्प्रायणं ज्योतिरुदयनं भविष्यतीति १३ तत्रात्मा स्तोभविभाग्यः १४ प्रथमायैवानुगानाय प्रस्तोता प्रस्तुयादात्मने च १५ इतराण्यनुगानान्युद्गातैव सर्वाणि ब्रूयात् १६ तेषां निधनेष्वेनमनूपेयाताम् १७ उत्तमानि वा त्रीण्यनुगानानि प्रत्याहृत्येतरैः सहात्मपदेभ्यः स्तोभधर्मेणानुसंहरेयुः १८ यानि प्रागात्मन आदौ तानि सकृद्यान्यूर्ध्वमन्ततस्तानि सकृदात्मनैव स्तोमं पूरयेदित्यपरम् १९ पर्यायाद्यन्तेषु २० विष्टावानां वा २१ भासनिधने दशमस्य पदस्योपायमुद्गातैव ब्रूयात् २२ सर्वाणि राजने त्रिरुक्तानि पञ्चकृत्वो ब्रूयुः २३ तस्यानुपदं स्तोभाः २४ पदेन प्रस्तावः २५ तृतीयेन पदेन पुरस्तात्स्तोभेन प्रतिहारः २६ विभाग्यं वा २७ तत्र देवताभ्यो यद्यनन्तरं पूर्वं पदं तेन सहैता ब्रूयुः २८ व्यवस्तोभेत्पददैवतमित्येके २९ निधनानि पदानि पदस्तोभेषु तथैवेडाः ३० तेभ्यो नाना स्तोभेयुः ३१ त्रिभ्यः प्रथमेभ्यः प्रस्तोता त्रिभ्य एव सप्तमप्रभृतिभ्यः प्रतिहर्ता ३२ अर्द्धं पदं निधनमिडाव्यवेतेषु ३३ सर्वमव्यपेतेषु ३४ चतुर्थस्य प्रथमः पादस्त्र्यक्षराणि चत्वारि निधनानि ३५ तथा तृतीयः ३६ द्वितीयोत्तमौ वा द्वैधं चतुरक्षरश इतरौ ३७ अविभाग्याश्चेदष्टमेन स्तोभेन प्रथमस्य ३८ नवमेन परेषाम् ३९ दशमेन वान्त्यस्य ४० सर्वेषां प्रथमेन प्रस्तावः ४१

इति द्राह्यायणश्रौतसूत्रे विंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

इलान्दस्योत्तमेऽनुगाने षट् १ विभाग्यानीतराणि २ प्रथमं वा विभाग्यम् ३ तत्रोत्तमस्य स्तोभस्य मध्यमेन वचनेन ४ एकादश दैर्घतमसस्य ५ अष्टमैः स्तोभैस्त्रिरुक्तैर्भद्रश्रेयसोः ६ पञ्चमैश्च यदि द्विप्रतिहारे ७ पञ्चाक्षरशः स्तोभविभाग्ये धर्मविधर्मणी ८ द्विपदाकारं वा ९ तयोर्दशमैः स्तोभैः प्रतिहारः १० षष्ठैश्च यदि द्विप्रतिहारे ११ पदान्ते त्रीणि सौहविषे १२ पदादौ वा १३ मध्यमं वचनं स्वर्णिधने सौहविषे १४ विभाग्यं वा १५ मध्यममेव वचनं पुरस्तात्स्तोभं वैराजस्य १६ तस्य पदान्तांश्चतुर्वाभ्यस्येयुः १७ तथा चातुर्थिकस्य वात्सप्रस्य १८ समाधिं तु ३० ऋगादिमुपरिष्टाल्लामकायनः २० स्तोभं शाण्डिल्यः २१ त्रैककुभे च पदादिः २२ अविभाग्यानामुत्तमे पदे प्रागुपायात् षट्सु व्यावर्गवत्स्वष्टसु वा यथा वामदेव्यक्रोशयोः पूर्वेण व्यावर्गेण प्रतिहरेदिति शाण्डिल्य उत्तरेणेति धानंजय्यः २३ प्रातिहारिकमेव गीतं प्रतिहारो वैच्छन्दसेषु २४ अप्यपदादौ २५ नोर्ध्वं प्रतिहारादोंकारेणाददीतेति गौतमः २६ प्रत्यवेत स्वराणां तु प्रत्युद्गृह्णीयात् । यथा कालेयवात्सगुर्द्दानाम् २७ नकारिणाम् । मयो वा । वरो वा २८ ओंकारेण प्रत्यवेतस्वराणामाददीतेति धानंजय्यः २९ यथाम्नायं शाण्डिल्यः ३० इहकार इडाथकारौ गीतं च निधनस्वरं हीषीस्वरं च द्व्यक्षरं देवताश्चारण्येगेयेषु तान्यन्तःसामनिधनानि ३१ वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्ताद्वृद्धः क्रुष्टो वाकारः स्वरितं वार्चिकं वा वृद्धं पूर्वेषां त्रयाणाम् ३२ यथा देवत्यस्त्वाष्ट्रीसाम यौधाजयं दार्ढच्युतमाथर्वणमान्धीगवम् ३३ तेभ्यो यन्निगदवर्त्यनन्तरमार्चिकं तेन सहोपेयुरनादेशः ३४ इहकारादिमिडां सर्व उपेयुः ३५ तानि प्रतीचीनेडानि ३६ इकारं त्वन्यासु गौतमः ३७ इडेति धानंजय्यः ३८ इकारान्तं चैवोपायं संप्रगाथेषु संप्रगायन्ति कुत्साः ३९ एवं नः कृत्स्नेडोपेता भविष्यतीति ४० प्रत्युद्गीतस्तु खल्वेषां तथोद्गाता भवति ४१ कृत्स्नामेके समयाम्नायाभ्याम् ४२ पुरीषपदशेषाणि निधनान्याचार्याः स्वरि-तान्तानि यथाधीतं वा ४३

इति द्राह्यायणश्रौतसूत्रे विंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

त्रिरात्रेषु च यौधाजयस्यैकाक्षराणि निधनानि १ प्रगाथेषु बृहद्रथन्तर-योर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे २ तयोर्द्व्यक्षरः प्रस्तावः सर्वत्र ३ तृचेष्वक्षरसंयोगेन ४ प्रथमाया उत्तममक्षरं मध्यमायाश्च प्रथमम् ५ एवमेवापरयोर्द्वितीयोत्तमयोः ६ प्रस्तावप्रतिहारनिधना-नामक्षरपरिमाणं यथायोनि चिकीर्षेद्वैच्छन्दसेष्वनादेशे ७ यस्यार्चिकमुदात्तानुदात्तं तद्गूढमथ यस्य सामिकं तत् सामोढम् ८ यथा पौष्कलस्योत्तरयोर्यथा३३३विदे३३ । समप्सुजीऽ२३४५ दिति धानंजय्यस्तद्गूढम् । यथाविदेऽ२३४५ । समप्सुजीऽ२३४५दिति शाण्डिल्यस्तत्सामोढम् ९ ऊनाक्षरेषु पादेष्वक्षरोपधिं शाण्डिल्यः १० यथाग्निस्त्रिणिधनस्य आनूपे२३४गो । मान्गोभिराऽ३१उवाऽ२३ । आऽ२३क्षाः । सोमो३दूऽ२३४ग्धा ॥ भिराऽ३१उवाऽ२३ ॥ आऽ२३४क्षाः ॥ तदक्षरसधातु ११ अनुपधिं धानंजय्यः । आनूपेऽ२३४गो । मान्गोभिरऽ३१उवाऽ२३ । आऽ२३४क्षाः ॥ सोमोदूऽ२३ग्धा ॥ भिराऽ३१उवाऽ२३ ॥ आऽ२३क्षाः ॥ तत्पदसधातु १२ पाङ्क्तस्यानुष्टुप्सु द्वितीयं पदं द्वैधं व्यूहेच्चतुरक्षरशो यथर्षभस्य शाक्वरस्य १३ तृतीयं बृहतीष्वष्टाक्षरं चतुरक्षरं च यथा संकृतिनः १४ सिमा बृहत्यनुष्टुप्सु यथापदं व्यूहेत् १५ स हि ऋग्धर्मः १६ सप्तधेत्याचार्याः १७ सप्त हि शाक्वराणि १८ उपक्षुद्रा इति चाह १९ तासां द्वितीयं पदं द्वे द्वे कृत्वा चत्वार्युधः २० अष्टौ चत्वारीति तृतीयम् २१ चत्वार्यष्टाविति वा २२ समधानुष्टुप्सु २३ यथास्थानमशाक्वराणि २४ योनौ यान्यभ्यासेनान्यच्छन्दः संपद्यन्ते यथा गौरीवितौदलकौत्सत्रैककुभवैखानसानि तदापन्नेषु तेषु गौतम-सार्दागवावनभ्यासम् २५ मशको गार्ग्योऽभ्यासं मशको गार्ग्यो-ऽभ्यासम् २६

इति द्राह्यायणश्रौतसूत्रे विंशे पटले चतुर्थः खण्डः ४

एकविंशः पटलः । प्रथमः खराडः

उपास्थानेष्वन्यानि निधनानि १ स्वरानादेशे तथा स्वराणि स्युः २ इडाश्चानादेशे ३ उबित्यर्द्धेडा ४ प्रकृतिस्वरा प्रथमस्वरा वा ५ अ्रध्यर्द्धा त्वध्यर्द्धोपानाम् ६ औत्पत्तिकः स्वरः स्वः काशीते ७ दैवोदाससुज्ञानयोश्च ८ स्वःपृष्ठे च पूर्वः ९ उत्तर इति गौतमधानंजय्यौ १० औपगवयोरथामथा वा ११ कामं तु नाना १२ अभिचरणीयेषु वा मथाथान्यत्र १३ जागतस्य सोमसाम्न इन्द्र इव दस्यूꣳरमृणाः । सूर्य इव दस्यूꣳरमृणाः । वज्रिन् सुवज्रिन् १४ द्विर्वावस्येत् १५ इन्द्र इव दस्यूꣳरमृणाः । सूर्य इव दस्यूꣳरमृणाः । वज्रिन् सुवज्रिन् । इन्द्र इव दस्यूꣳरमृणाः । सूर्य इव दस्यूꣳरमृणो वज्रिन् सुवज्रिन्निति वा १६ सकृच्चान्ततः इन्द्र इव दस्यूꣳरमृणः सूर्य इव दस्यूꣳवमृणो वज्रिन् सुवज्रिन् १७ यथा वायोभस्त्रायां निहन्यमानायां ह्लादः स्यात् १८ यथा वायसी समृच्छेयाताम् १९ यथा वा निष्कः कृन्तत्रेणाभिहतो ध्वनेत् २० यथा वा सनूपुरपादस्य निघातः स्यात् २१ गणिणति वा २२ यथा वाप्सु पिप्पलं निपतेत् २३ प्लुगिति वा २४ प्लौगिति वा २५ सहोभीरिति वा २६ कार्तयशे च त्रयो विकल्पाः २७ दयित्नवे हम् । दयित्नवे हम् । दयित्नवे हम् २८ एवमेवोत्तरस्मिन्निधने २९ गायत्रस्य पादेन प्रस्तावः सर्वत्र ३० अष्टाक्षरेणेति धानंजय्यः ३१ तथा पुराणं ताराडम् ३२ तस्य निदर्शनार्थं गानं गायत्रीषु ३३ उपास्मै गायता नरोमिति धानंजय्यः ३४ उपास्मै गायता नरो इति शाण्डिल्यः ३५ उपास्मै गायता नरा इत्येके ३६ शेषमुद्गाता ३७ मनसा तु स्वभक्तिमोंकारं तथा स्वरं वाचा ३८ सर्वे वा निधनन्यायात् ३९

इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले प्रथमः खराडः १

द्वितीयः खराडः

पवमानायेन्दावा इत्येकावृत् १ अभिदेवां इया इत्यपरा २ क्षाता इत्यपरा ३ पूर्वा वा वर्गाववनर्द्याविति धानंजय्यः ४ मध्यमायामावृति द्वौ स्तोभौ कुर्यात्तावनर्द्याविति गौतमः ५ अभिदेवां इया ६ सर्वत्रौकाराविंत्येके स्तोभधर्मत्वात् ७ यमर्चमाचार्यास्तथर्क् सलिङ्गदृष्टान्तात् ८ स्तोभानैकान्त्याच्च ९ ज्यायसि च्छन्दसि प्रथमायामावृत्यावपेदुत्तमं पादं शिष्ट्वा १० अष्टाक्षरमिति धानंजय्यः ११ ऊर्ध्वं रेतस्याया द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयात् हिं आ इति १२ तं रेतस्यायां प्रतिहर्ता मनसा ध्यायेन्न परास्विति गौतमः १३ परास्वेवेति धानंजय्यशाण्डिल्यौ १४ रथन्तरवर्णायाक्षराण्यभिष्टोभेत् १५ भाऽ३भाऽ३ इति शाण्डिल्यः १६ भ भ इति धानंजय्यः १७ त्र्यक्षरं चाभिष्टोभेत् १८ प्रथमं ह्यक्षरं लुप्तमिति १९ हिम् इति हिंकारः २० द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि २१ सर्वत्र चत्वारीति शाण्डिल्यः २२ यथर्च्चं चान्तं ब्रूयात् क्षाता इवायू इति २३ स्वाराण्याज्यानीति स्तुत्वा निधनवतेति च नानात्वचोदनात् २४ पदानुस्वारमेके स्तोभाश्रुतेः २५ बहिःस्वारं वा प्राणसामान्यात् बार्हतं हीति २६ आकारं त्वाचार्याः स्मृतेः २७ गायत्रं निधनवदनिधनमैडं गायत्रं पुरस्तात् भवति स्वारमन्ततः इति नानात्वदर्शनात् २८ स्वाराणीति स्वरितत्वात् स्वरत्वाद्वा तस्य स्वरप्रधानत्वाद्वा गायत्रस्य २९ समे च भक्तिनानात्वे ३० तं दीर्घम् ३१ अवस्वरेदिति धानंजय्यः ३२ क्षाता ओऽ३ इति गौतमः ३३ क्षातो वा इत्येके ३४

इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले द्वितीयः खण्डः

## तृतीयः खण्डः ३

काम्यानां निधनानां किंचिच्चिकीर्षन्नुत्तमस्य द्व्यक्षरस्य स्थाने कुर्यादिति शाण्डिल्यः १ अभिदेवां इयक्षताइ इति वा सर्वामृचं समाप्य २ अविकारेण सर्वं गीत्वेति धानंजय्यः ३ तान्याकारस्थानेषु स्युर्निधनत्वेन हि चोद्यन्ते ४ कृतलक्षणचोदनाच्चौत्पत्तिकस्वराणि ५ एकाक्षरं ष्ठास्वरं द्व्यक्षरं हीषीस्वरमिति वा न्यायात् ६ कृतस्वरं तु

निधनं तस्य चोद्यते वर्णविकारः ७ यथा रथन्तरस्य गायत्र्यः ८ तानि सर्वत्र स्युरनारभ्योत्पत्तिकत्वाद्गायत्रस्य ९ बहिष्पवमान इत्येके १० तद्धि विकारा नातिक्रामन्ति । यथा रेतस्यारथन्तरवर्णयोर्धुरां च सामान्ताः इति ११ बहिष्पवमानसंयोगस्तु तेषां न कामसंयोगः १२ गीतिविकारा गायत्रस्य धुरः १३ स्तोत्रीयानुरूपयोर्ज्योतिष्टोमस्यै-वाज्येषु नान्यत्र १४ रेतस्यायास्त्रिरुद्गृह्णातीति ब्राह्मणं भवति । पाऽ३वाऽ३माऽ३ नायेन्दावा३ १५ गायत्र्युत्तरा १६ तस्या द्वे त्र्यक्षरे सशयनी व्यतिषजतीति ब्राह्मणं भवति १७ मध्यमस्य च पद-स्योत्तममुत्तमस्य च प्रथमम् १८ आथर्वणो आशिश्रादेऽ२युर्वन्दे-वायदा३३३इति १९ त्रिष्टुबुत्तरा २० तां बलवदिवोरसेव गायन्तीति ब्राह्मणं भवति । शाऽ३म् । जाऽ३ । नाऽ३ । यशमार्वता३ । शं राजानोऽ३षा । धाऽ३३ २१ तस्या द्वे उत्तमार्द्धेऽक्षरे द्योतयतीति ब्राह्मणं भवति २२ ये ऊर्ध्वं हिंकारात्ते निर्ब्रूयादिति गौतमः २३ षा धा इति धानंजय्यः २४ जगत्युत्तरा २५ तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडन्निव गायत्र्या द्वादशेभ्योऽक्षरेभ्य इति ब्राह्मणं भवति २६ पारिष्टोभांऽ२तयाकृपाऽ२सोमाः शुक्राः२गवाऽ२२२ २७ तस्या-श्चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयतीति ब्राह्मणं भवति २८ द्वे पुरस्ता-द्धिंकारात्तथोपरिष्टादिति गौतमः २९ स्तोमाश्शुक्रा इति धानंजय्यः ३०

इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

अनुष्टबुत्तरा १ तान्निनर्दन्निव गायतीति ब्राह्मणं भवति । आवाजं वाज्यक्रमीऽ२२२त् । सीदन्तोवाऽ२२२ । नुषाऽ२२२ः २ निरुक्तां चानिरुक्तां च गायेदितीति ब्राह्मणं भवति । समस्तधुरां मन्यत इति गौतमः । त्रिष्टुब्जगत्योर्ह्यक्षराणि निराहेति ३ एतस्या एवेति धानंजय्यशाण्डिल्यौ ४ तस्या द्वितीयं पादं निर्ब्रूयात् । तृतीये चाक्षरे पञ्चमषष्ठे ५ पङ्क्तिरुत्तरा तस्या द्वे द्वे अक्षरे उदासं गायत्र्या

षड्भ्योऽक्षरेभ्य इति ब्राह्मणं भवति । संजग्मानो दाइवा कावाइ इति धानंजय्यः ६ कावा इति शाण्डिल्यः ७ सदिति रेतस्याया धुरो निधनं समिति गायत्र्या स्वरिति त्रिष्टुभ इडेति जगत्या वागित्यनुष्टुभः ८ तेषामुक्तो न्यायः काम्यैः सामान्तैर्निधनैः ९ न तूर्ध्वं बहिष्पवमानात्स्युः १० जगतीगायत्र्यौ त्रिष्टुबनुष्टुभाविति पृथगाज्यप्रथमासु गायेत् ११ तत्पुराणं यथाज्यगानम् १२ गायत्रीत्रिष्टुभोर्व्यतिक्रमं धानंजय्यः १३ गायत्रीं मैत्रावरुणस्याज्यप्रथमायां होतुरितरा आदितः १४ तत्पुराणं होतुराज्यगानम् १५ त्रिष्टुभ उत्तरां गायत्रीं गीत्वा तस्या एव द्वितीयायामृच्यानुष्टुभं गायेदिति धानंजय्यो गायेदिति धानंजय्यः १६

इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले चतुर्थः खण्डः ४

इति द्राह्यायणश्रौतसूत्रे सप्तमः प्रपाठकः समाप्तः ७

अष्टमः प्रपाठकः । द्वाविंशः पटलः । प्रथमः खण्डः

उदगयनपूर्वपक्षपुण्याहसंनिपाते यज्ञकालोऽनादेशे १ संख्यामात्रे च दक्षिणा गावः २ हिरण्यमिति जातरूपं विद्यात् ३ प्रथमायां पूर्वपक्षस्य दीक्षेतैकाहेभ्यः ४ दृष्ट्वा वा नक्षत्रयोगम् ५ तेषामेका दीक्षानादेशे तिस्रश्चतस्रोऽपरिमिता वा ६ तिस्र उपसदः ७ ज्योतिष्टोमस्योक्थानामुत्तरे सौभरनार्मेधेऽतिरात्र उक्थ्यान्त इतराणीति गौतमो वृत्तिग्रहणात् ८ अनियोगमितरेषां धानंजय्यो विशेषाम्नानात् ९ सर्वेषां यथाकामीति शाण्डिल्यस्तुल्यचोदनात् १० आष्टादंष्ट्रयोर्विकल्पः स्यात् ११ काम्यानुक्थ्यच्छन्दोयोगानतिरात्रस्यमन्यन्ते सौभरनार्मेधप्रमाणाः १२ वृत्तिस्त्वनुष्टुभां रात्र्युपाये न विद्यते १३ दृश्यते चान्यत्र रात्र्युपायान्नार्मेधं यथाभिप्लवस्य पञ्चाहे १४ तस्यानुष्टुभः स्तोत्रीयः स्यादुक्थ्यान्तेषु वैच्छन्दसोऽतिरात्रेषु । वृत्तिविभागात् १५ वैच्छन्दसमेवैके ब्राह्मणोक्तत्वात् १६ स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पा आग्निष्टोम्यमुक्थ्यतातिरात्रमिति १७ तस्यानतिरात्रस्य द्वादशशतं दक्षिणाः १८ गो आयुषोश्च १९

विश्वजिदभिजिद्भ्यां यमाभ्यां यजमानः पूर्वापराभ्यां यजेतेति धानंजय्यः २० युगपदिति शाण्डिल्यः २१ अभिजितो दक्षिणं देवयजनं स्याद्विश्वजित उत्तरम् २२ तत्प्रति पत्नीशाला स्यात् २३ नानर्त्विजः २४ यच्चान्तर्वेदि कर्म २५ अथ यद्बहिर्वेद्येकं तत् २६ अभिजितः पूर्वं पूर्वं कर्म संतिष्ठेत विश्वजित उत्तरम् २७ तयोः पृथक् सहस्रे दक्षिणाः २८ कामं तु यमाभ्यां यजेत २९ सहस्रमभिजिति दक्षिणाः ३०

इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

तस्यावभृथादुदेत्य रोहिणीं वत्सच्छविं परिधाय धर्मान् कुर्यात् १ त उक्ता ब्राह्मणेन २ अरण्ये तिस्रो वसतीत्युदुम्बरे वसेदिति ३ उदुम्बराभावेऽप्युदुम्बरशाखां निखनेयुः ४ खनित्रेण जीवतीति यत्तत्र खान्यं स्यात्तेन जीवेत् ५ खान्याभावे धान्यपात्राणि निखाय तैरुत्खानं जीवेत् ६ उभयतःक्ष्णुदभ्रिर्भवतीति वैणवी काल्माषीति शाण्डिल्यो याकाचनेति धानंजय्यः ७ निषादेषु तिस्रो वसतीति पार्श्वतो निषाद-ग्रामस्य वसेत् ८ तेषां काममारण्यं भुञ्जीत नीवारं श्यामाकं मार्गं वा मांसम् ९ जने तिस्रो वसतीति राजन्यबन्धुर्जनो ब्राह्मणः समानजन इति शाण्डिल्यः १० विवाह्यो जनः सगोत्रः समानजनः इति धानंजय्यः ११ प्रतिवेश्यो जनो जनपदो यत्र वसेत् स समानजन इति शाण्डिल्यायनः १२ एते धर्माः सर्ववेदस दक्षिणानां सर्वेषाम् १३ व्रतवत्सु सर्वेष्वमावास्यायां दीक्षित्वोखामाबध्नीत सांवत्सरि-केभ्योऽन्यत्रेति गौतमः १४ सह सुत्याभिः षडहानि संवत्सराद-धिकानि कृत्वोत्तिष्ठेयुः १५ असमाप्ते वा संवत्सरे रात्रिसत्त्रेषु राजानं क्रीणीयुः १६ यथा जाति तु प्रथमे पञ्चदशरात्रे दीक्षेरन् १७ सर्वत्र वा यथाजात्यन्यत्र चेदुपेतमिति शाण्डिल्यः १८ अनुपेतं चेदपीति धानंजय्यः १९ तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन षड्वा द्वादश वा २० तत्र ब्रह्मणेऽश्वरथं शतं च दद्यात् २१ तथाग्निं

चिन्वतेऽध्वर्यवे २२ पृष्ठेन च स्तुवानायोद्गात्रे २३ तच्चानुशंसते होत्रे २४ सर्वेभ्यश्च सहस्रम् २५ सर्ववेदसदक्षिणं वा २६ इतरच्छाण्डिलम् २७ सर्वे साहस्राः पृथक्सहस्रदक्षिणाः २८

इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

साद्यस्क्रेण यक्ष्यमाणो महारात्रे प्रातराहुतिं हुत्वाचक्षीतर्त्विग्भ्यः साद्यस्क्रोम इति १ प्रागेव प्रहिणुयादिति धानंजय्यः २ दीक्षाप्रभृति सद्यः सर्वं कुर्युः । प्रथमद्वितीययोः श्येनस्य च ३ एकत्रिकान्ताः षट् साद्यस्क्राः इति शौचिवृक्षिर्निकायित्वात् ४ उर्वरा वेदिरिति प्रथमे ५ यवोर्वरा पक्वा स्याद्व्रीर्वह्युरा वा ६ तत एव समुत्कर्तं खल उत्तरवेदिं कुर्युः ७ खले वालीयूपो भवतीति लाङ्गलेषायूपः स्यात् ८ कलापी चषालभागा ९ अतीतायां चेद्यववेलायां व्रीहिवेलायां वा यजेत । धान्यपात्राण्युप्त्वाभिकृषेयुः १० धान्यपात्रा उत्तरवेदिः स्यात् ११ मूतश्चषालभागः १२ त्रिवत्सः साण्ड इति बहुत्रिवर्षस्य जानपदी त्रिवत्स इति १३ यो वा तिस्रो धयेत् १४ त्रिवर्षो वैव स्यात् १५ प्राञ्चं होतारं वहेयुरुदञ्चमुद्गातारं प्रत्यञ्चमध्वर्युं दक्षिणा ब्रह्माणम् १६ पुरस्ताद्वात्र वसेयुः १७ तत्रैभ्यः सोमं प्रब्रूयुः अश्वरथैर्यात्वा १८ न उक्ता ब्राह्मणेनाध्वानश्च १९ कुर्युरेवर्त्विज इति शाण्डिल्यः २० अन्यांस्तु ब्राह्मणांस्तानध्वन ऊर्ध्वा तेभ्यः सोमं प्रब्रूयुः २१ असौ सद्यस्क्रिया यजते । तदहं प्रब्रवीमीन्द्राय विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्यः इति २२ सक्षीरदृतयो रथा भवन्तीति साद्योदुग्धेन क्षीरेण दृतयः पूर्णाः स्युः २३ ततोऽयं नवनीतमुदीयात् फेनो वा तदाज्ये विसृजेयुः २४ अश्वः श्वेत एतस्य दक्षिणा तमुद्गात्रे दद्यात् २५ किंचिच्चेतरेभ्यः २६

इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

एतेनैवोत्तरो व्याख्यातस्तस्याश्व एकविंशो दक्षिणानाम् १ अश्वो वै वा २ एकरात्रीणः ३ द्व्यहीनोऽनुक्रीः ४ तेऽङ्गिरस आदित्येभ्यः श्वसुत्यामिति ह्याह ५ तस्य क्रयप्रभृत्युत्तमहः स्यादिति गौतमः ६ तं सद्यः परिक्रीयेति ह्यादित्यानाह नेतरान् ७ अपरेद्युः क्रयणाच्चानुक्रीरित्याख्या ८ उपवसथान्तं पूर्वमहः स्यादिति धानंजय्यः ९ श्वः सुत्यामिति ह्याह श्वः क्रयं प्राब्रुवन्नित्यभविष्यत् १० तं सद्यः परिक्रीयेति च प्रथमस्य सद्यस्तां दर्शयति ११ द्व्यहीनत्वात्तु जघन्यतरेऽङ्गिरसोऽक्रीणंस्तस्मादनुक्रीरित्याख्या १२ तस्याश्व एकशततमो दक्षिणानामश्वो वै वा १३ एतेनोक्तो विश्वजिच्छिल्पो द्विरात्रीणः १४ त्र्यहीन इति धानंजय्यः १५ दैक्षं प्रथममहः क्रयप्रभृत्युपवसथान्तं द्वितीयं सौत्यमुत्तमम् १६ तस्य दक्षिणा धनानि यथोत्साहं दद्यात्तस्मिन् जनपदे यान्यभिध्याततमानि स्युः १७ सर्ववेदसनिर्मां दद्यादिति धानंजय्यः १८ विमितं शयनमारोहणं महानसे दासमिथुनौ धान्यपल्यं सीरं धेनुरिति १९

इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले चतुर्थः खण्डः ४

## पञ्चमः खण्डः

व्रतीनानां यौधानां पुत्राननूचानानृत्विजो वृणीत श्येनस्य १ अर्हतामेवेति धानंजय्यः २ अभिवातासु या अनभिवाताः स्युस्तासामाज्यं मन्थयेत् ३ यत्र स्तम्बा वा वृक्षा वा बहुलाः जाताः स्युस्तांश्छेदन्देवयजनं कुर्युः ४ यद्वा विदाहि स्थण्डिलम् ५ शवनभ्ये अधिषवणे इति ६ येन यानेन मृतं निर्हरेयुस्तस्य नभ्ये अधिषवणफलके कुर्युः ७ यूपःस्फ्याग्र इति चषालभागः स्यात् ८ लोहितोष्णीषा लोहितवाससो निवीता ऋत्विजः प्रचरन्त्युपेतपुरुषा उद्‌ज्यधन्वानः ९ पवमाने रथन्तरं कुर्यादिति बृहत्यामेकर्च्चानां स्थाने स्यात्तद्धि बार्हतानां स्थानम् १० एवं च तृचे भवति ११ अविप्रतिषेधेनेतरेषामनुकल्पयेदित्यपरमेवमल्पीयान् विकारः १२ तत्र पञ्चमं बार्हतमाहरेत् स्तोमवशेन १३ तत् पौरुमद्गं स्यात् भ्रातृव्यवधं

ह्यस्मिन् दर्शयति १४ पृष्ठेषु रथन्तरस्योत्तरयोर्द्विपदे स्याता-मित्याचार्याः । पराचीष्विति ह्याय १५ ककुभावेवेति गौतमः १६ अनावृत्तिमेतत् स्तोमस्य दर्शयतीति १७ प्लवं ब्रह्मसाम कुर्वंश्चैतस्यर्त्तु कुर्यात् १८ वृत्तिर्ह्येतस्मिन् स्थाने पावमानीनां न विद्यते १९ नव नव दक्षिणा इति नव वर्गान्यथोत्साहं दद्यात् । काणखो-रकूटवराटानाम् २० तासामभि दक्षिणावेलायां लोहितं जनयेयुः २१ एकत्रिके सद्यः सर्वं कुर्युः २२ एकदीक्षस्त्र्युपसत्क इति गौतमः २३ तस्य गायत्रपार्श्वमार्भवोऽया रुचेति २४ पुरोजित्यां शाण्डिल्यः २५ तस्याः ससुन्वे यो वसूनामित्येतां मध्ये कुर्यात् २६ प्राचीमनुप्रदिशं याति चेकितदित्येतस्यामुद्वंशीयं कुर्यादुद्धृत्य गायत्रपार्श्वमिति लामकायनः २७ त्रिकं बहिष्पवमानं स्यादिति शाण्डिल्यः २८ पञ्ची मध्यंदिनः सप्तार्भव एकीनीतराणि २९ त्र्यैकिनमेके ३० होतृषामाणि वा त्रिकाणि पवमानाश्च ३१ चतुरुत्तरसंपन्नो वा ३२ द्वे द्वे त्रिकपञ्चिनी ३३ प्रत्यवरोहेण तस्य तत् षष्ठम् ३४ शतं दक्षिणा दक्षिणाः ३५

इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले पञ्चमः खण्डः ५

## त्रयोविंशः पटलः । प्रथमः खण्डः

व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय यज्ञोपकरणानि चेष्ट्वा य एषामध्ययनेऽभिक्रान्तितमः स्यादभिजनेन वा तदभावेऽपि भोगलाभेन तस्य गार्हपते दीक्षेरन् १ भक्षांश्चानुभक्षयेयुः २ ज्योतिषानिष्ट्वा प्रायश्चित्तपूर्वकारबलीयस्त्वात् ३ यथा दक्षिणः स यज्ञक्रतुः पञ्च दक्षिणा इति ४ विसमाप्ते त्वेतानीन्द्रात् तस्मादप्रमाणम् ५ इष्ट्वैवानारभ्य दोषवचनात् ६ व्रातप्रतिपद्विधेः ७ यथा चाग्न्या-धेयमपूतानाम् ८ उपहव्याग्निष्टुन्मीमांसितसत्रं पुनः स्तोमाश्चानिष्ट्वा स्युः ९ ये के च व्रात्याः संपादयेयुस्ते प्रथमेन यजेरन् १० ब्राह्मणेनेतर उक्ताः ११ स्थाविर्यादपेतप्रजनना ये ते शमनीचामेढ्राः १२ यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतस्तदार्ध्नीतेति कस्येदं ब्राह्मणं स्यादिति

१३ नौधसप्रतिषेध इत्याचार्याः १४ निरुक्तनिधनत्वात् १५ इन्द्रेति वा द्यौताने निधनं निराहुस्तस्य प्रतिषेधो यथाम्नायमेवोपेयुः १६ उष्णीषं च प्रतोदश्चेति उष्णीषं च यत्तिर्यङ्नद्धं भवत्यव्रात्यानाम् १७ धनुष्केणानीषुणा व्रात्याः प्रसेधमाना यान्ति सज्याह्लोडः १८ विपथश्च फलकास्तीर्ण इति कम्प्रमिश्राभ्यामश्वाश्वतराभ्यां रथो युक्तः स्यादिति शाण्डिल्यः १९ याभ्यां काभ्यां चाश्वाभ्यामश्वतराभ्यां वेति धानंजय्यः २०

इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

कृष्णशं वास इति कृष्णं कद्रुमिश्रमिति शाण्डिल्यः १ शुक्लं कृष्णदशमिति गौतमः २ कृष्ण इत्येवं मन्यत इति धानंजय्यः ३ कृष्णबलक्षे अजिने इति ४ यावविकौ द्वाभ्यामेकैकोऽविभ्यां क्रीतः स्यात्तयोः पार्श्वसंहिते कृष्णवलक्षे अजिने स्याताम् ५ वलक्षमिति श्वेताख्या ६ रजतो निष्कस्तद्गृहपतेरित्येतत्सर्वं गृहपतिराहरेत् ७ त्रयस्त्रिंशतं च ८ द्विस्त्रयस्त्रिंशतमिति धानंजय्यः ९ वलूकान्तानि दाम तुषाणीतरेषामित्याविकानि लोहितप्रवाणानि वसनानि स्युः १० दामतूषाणीति दामदशानि स्युः ११ दशाख्या तूषमिति १२ द्वे द्वे दामनी इति १३ द्वे द्वे उपानहाविति कृष्णाः कर्णिन्य इति शाण्डिल्यो याः काश्चेति धानंजय्यः १४ द्विषंहितान्यजिनानीति पूर्वाभ्याम-जिनाभ्यां व्याख्यातानि १५ तच्चेतरेषामेकैक आहरेत् १६ त्रयस्त्रिंशतं च १७ त्रयस्त्रिंशता त्रयस्त्रिंशता गृहपतिरभिसमायन्तीति १८ त्रयस्त्रिंशतमृत्विग्भ्यो दद्युः १९ व्रात्येभ्यो व्रात्यधनानि ये व्रात्य-चर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मगधदेशीयाय २० यस्मा एतद्ददति तस्मिन्नेव मृजनायन्तीति २१ तैरिष्ट्वा त्रैविद्यवृत्तिं समातिष्ठेयुः २२ तैषां तत ऊर्ध्वं भुञ्जीत याजयेच्चैनान् २३

इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले द्वितीयः खण्डः २

तृतीयः खण्डः

षडग्निष्टुतः १ त्रिवृज्ज्योतिष्टोमश्चाद्यौ स्वर्क्कवारवन्तीयावधिकारका-मनानात्वात् २ न वा त्रिवृदविशेषात् ३ परे च वारवन्तीयातिदेशात् ४ क्रतुषु चानुवाक नानात्वात् ५ स्मृतेश्चत्वार इत्याचार्याः ६ पुनराम्नानात्त्रिवृज्ज्योतिष्टोमयोः ७ सर्वेषां च सार्ष्टोऽनुवाक ऋाद्यो गवामयनवत् ८ न वानुवाक नानात्वात् क्रतुपृथक्त्वम् । यथा-ज्योतिष्टोमेनानुवाकानाम् । यथा चतुर्मास्यवाजपेयराजसूयगर्गत्रि-रात्रेषु ९ तेष्वनडुहामश्वानामजानामिति यथोत्साहं दद्यात् । तथा हिरण्यस्य १० कश्चिदर्थमर्हन् यो न वाप्नुयात्स त्रिवृतां प्रथमेन यजेत । तस्य चतुर्युगश्वरथो दक्षिणास्तेषामेकः श्यावः स्यात् ११ यं ब्राह्मणाः सराजानः पुरस्कुर्वीरन् स बृहस्पतिसवेन यजेत १२ तस्य प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा व्यादिशति १३ ऋत्विग्भ्यो नापाकुर्यात् १४ अश्वद्वादशा मध्यंदिने १५ ता उभयोरपाकरोति १६ एकादश तृतीयसवने ता अनुबन्ध्य वपायां हुतायामपाकुर्यात् । तान्यप्येकादशैकादशशतानि स्युः सहस्राणि वा १७ नित्यस्त्वश्वो मध्यंदिने १८ य एवं पुरस्कुर्वीरन्नन्वग्भूतवृत्तिं तत ऊर्ध्वं तेषु वर्तयेत् १९ स्थपतिरिति चैनं त आचक्षीरन् २० श्येनेनेषुर्व्याख्यातः २१ दीक्षोपसदस्त्वस्यैकाहिक्यः २२

इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

सर्वस्वारेण यक्ष्यमाणो दीक्षाप्रभृति प्रयतेत यथा सौत्येऽहनि प्रेयामिति १ प्राणभक्षान् सर्वत्र भक्षान् भक्षयेत् २ तानपोऽभ्यवहारयेत्कर्ते वा-नुषेचयेत् ३ सोममद्भिः संसृज्य मार्जालीयसदेशे निनयेयुः ४ आर्भवे पवमाने स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिनमुपस्तीर्य दक्षिणशिराः प्रावृतो निपद्येत । तदेव संगच्छते । तदेव म्रियते इति ५ एतं मृतं यजमानं हविर्भिः सहर्जीषैर्यज्ञपात्रैश्चाहवनीये प्रहृत्य प्रव्रजेयुरिति शाण्डिल्यः ६ समापयेयुः शेषमिति धानञ्जय्यः ७ समापयेयुश्चे-दिति शाण्डिल्यायनो नेदिष्ठी तत्कृष्णाजिनं प्रतिमुच्य याजमानं

कुर्याद्भक्षांश्च भक्षयेत् ८ ऋत्विजो याजमानं कुर्युः सर्वहुतोभक्षान् जुहुयुरिति धानञ्जय्यः ९ संस्थितेऽहनि सन्त्वा हिन्वन्तीत्यासन्द्यङ्गानि समाहरेयुः १० सन्त्वा रिणन्तीति प्रक्षालयेयुः ११ सन्त्वा ततक्षुरिति तक्षुयुः १२ सन्त्वा शिशन्तीति विवयेयुः १३ तयैनमवभृथँहृत्वा सोमोपनहनेन प्रच्छाद्यानूबन्ध्यवपायाँ हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूण्यस्य वापयेयुः १४ अनूबन्ध्यशेषं समाप्य मध्ये देव-यजनस्य चितां चिनुयुः १५ पुरस्तादाहवनीयम् पश्चाद्गार्हपत्यं दक्षिण-तोऽन्वाहार्यवचनं पश्चिमेन गार्हपत्यं दक्षिणाग्निं मध्येशरीरम् १६ तं दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पयेदध्वर्युः १७ शिरसि कपालानि युञ्ज्यात् १८ समोप्तधानं च चमसम् १९ ललाटे प्राशित्रहरणम् २० नासिकयोः स्रुवौ २१ आस्ये हिरण्यमवधाया-नुस्तरणिक्या गौर्वपया मुखं प्रच्छाद्य तत्राग्निहोत्रहवनीं तिरश्चीम् २२ दक्षिणे पाणौ जुहूम् २३ सव्य उपभृतम् २४ पार्श्वयोः स्फ्ये २५ तथा वृक्वौ २६ उरसि ध्रुवाम् २७ उदरे पात्रीम् २८ उपस्थे कृष्णाजिनम् २९ अन्तरेण सक्थ्नी शम्यादृषदुपले यच्च नादेक्ष्यामः ३० दक्षिणस्योखस्य दक्षिणत उलूखलम् ३१ अनुसक्थं मुसलम् ३२ पादयोः शकटशूर्पे ३३ सर्वाण्युत्तानान्यासेचनवन्ति पृषदा-ज्यवन्ति कृत्वा सर्वेभ्योऽग्निभ्य उलपराजीस्तृणुयुर्यथास्मिन्नग्नयः समवेयुरिति ३४ आहवनीयाच्चेत्प्रथममेयात् ब्रह्मलोकमेष्यतीति विद्यात् । गार्हपत्याद्देवलोकम् । दक्षिणाग्नेः पितृलोकम् ३५ एवमेनं यज्ञपात्रैः क्लृप्तं त्रिश्छन्दोगः परिगायेन्नाके सुपर्णमिति ३६ धूम उदिते त्वेषस्ते धूम ऋण्वतीति ३७ प्रज्वलितेऽग्ने मृडमहां असी-त्येतयोरन्यतरेण ३८ तथैवावृता वृद्धाः श्रोत्रिया ज्ञातं परिगायन्ति । स एष यज्ञायुधि यजमानः स्वर्गं लोकमेष्यतीति विद्यात् ३९ जीवेच्चेद् यजेतोदवसानीयया ४० अभोजनेन तत ऊर्ध्वं मुमूर्षेदिति शाण्डिल्यः ४१ भुञ्जीत जिजीविषेदेवेति धानञ्जय्यः ४२ तस्य कृतान्नं दक्षिणा ४३ फाल्गुन्यां पौर्णमास्यां चातुर्मास्यान्यारभेत ४४ उक्तं कालान्तरं ब्राह्मणेन ४५ यजनीयेऽहनि वैश्वदेवशुनासीर्ये स्याताम् । उत्तरं च

वारुणप्राधासिकम् ४६ पर्वरायुत्तमँसाकमेधानाम् ४७ द्वादश-शतँशुनासीर्यस्य दक्षिणाः ४८ पञ्चाशदितरेषामह्नामेकैकस्यैकैकस्य ४९

इति द्राह्यायणश्रौतसूत्रे त्रयोविंशेपटले चतुर्थः खण्डः ४

चतुर्विंशः पटलः । प्रथमः खण्डः

उपहव्ये देवता नामधेयानि परोक्षं ब्रूयुः स्वस्थानासु १ प्रत्यक्षमस्वस्थानासु २ देवशब्दं सर्वत्र वर्जयेयुः ३ होता देवो महीमित्रस्येत्येते होता यज्ञोमहीयज्ञस्येति ब्रूयुः ४ इन्दुरिति सोमम् ५ आदिष्टा दक्षिणा ब्राह्मणेन ६ इतरेभ्यश्च किंचिद्दद्यात् ७ अृतपेयस्य द्वादश दीक्षोपसद इति तिस्र उपसदः । षड्वा ८ घृतव्रतो भवतीति यथोत्साहं दीक्षासु प्राश्नीयात् ९ उत्तरेणोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्वङ्गुलिपर्वभिः प्रतिलोमैः प्राश्नीयादिति शाण्डिल्यः १० एकाङ्गुल्या पृथक्पर्वभिः सर्वान्देशांश्चमसा मिताः स्युः । तैरनु-लोमैरिति शौचिवृक्षिः ११ प्रतिलोमैरिति धानंजय्यः १२ अृतमुक्त्वा प्रसर्पन्तीति प्रस्रप्स्यतः सदो भक्षयिष्यन्तश्च देव सत्यानि ब्रूयुरियं भूमिरित्युक्त्वासावादित्य उदेता प्रातरादित्य इति १३ या अस्य देवताश्चमसैरिज्येरन् तत्पीतवद्भक्षमन्त्रानूहेयुरिति धानंजय्यः १४ अविकारेण तु नाराशंसानाम् १५ सर्वक्रतुष्वेवमेके १६ अनुव्यूहन्ति च भक्षच्छन्दांसि १७ सर्वत्राविकारेणाचार्याः १८ सोमचमसो दक्षिणेत्यभिषुतस्य स्यात् १९ तस्मिन्हि चमसं प्रमाणम् २० तं मध्यंदिने चमसमुखीयैः सहोन्नयेयुः २१ जुहुयुश्चास्य हुतो देयः इति ब्राह्मणम् २२ तं दक्षिणावेलायां पूर्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षिणेन सदो हविर्धानानि हारयित्वा पूर्वया द्वारा सदः प्रविशे-युः २३ संस्थितेऽहन्यृत्विग्भ्यः किंचिद्दद्यात् २४

इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

आदिष्टा दक्षिणा ब्राह्मणेन दूणाशस्य १ एतावन्त्यष्टाविंशति-शतमानानीति यत्र स्याच्चतुर्विंशतिमानानां तावन्त्यष्टाविंशति-शतानि दद्यात् २ रुक्मो होतुरिति निष्को नामालंकारस्तं दद्यात् । स्रगुद्गातुरिति हिरण्मयी स्यात् ३ वैश्यस्तोमे सद्यो दुग्धेन पयसा सोमं मिश्रं कर्युः प्रातःसवने शृतेन मध्यंदिने दध्ना तृतीयसवने ४ तस्य दक्षिणाः द्वादशंशतं सहस्रं वा यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते ५ तीव्रसुति सोमातिपवितं याजयेदिति य इष्ट्वा पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्यः ६ यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानंजय्यः ७ ज्येष्ठो वानिष्टीकः कनीयसीष्टिनीति ८ तत्र भक्षावृता चमसानवजिघ्रेयुः ९ अभक्षयन्त ऋत्विजश्च-मसानवजिघ्रन्तीति ह्याह १० तानच्छावाकस्य स्तोत्रे भक्षयेयुरेवं सर्वेषु सवनेषु ११ अभ्यभिसोमानुन्नयन्तीति यानवजिघ्रेयुस्तेष्वे-वाभ्युन्नयेयुः १२ शतमाशिरं दुहन्तीति धेनुशतं दोहयित्वा तत्त्रैधं विभज्य सोममिश्रं कुर्युर्यथा वैश्यस्तोमे १३ तस्य तदेव धेनुशतं दक्षिणास्ता उ एव दक्षिणा इति ह्याह १४

इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

यं ब्राह्मणा राजानश्च पुरस्कुर्वीरन् स वाजपेयेन यजेत १ तस्य पौर्णमास्यां दीक्षित्वा त्रयोदश दीक्षाः कुर्वीरन् २ सप्तदश वा ३ अमावास्यायां दीक्षित्वा मासमिति गौतमः ४ संवत्सरमिति धानंजय्यः ५ षडुपसत्कश्च साग्निचित्यः स्यादिति ६ पार्ष्ठिकान् स्तोमान् ज्योतिष्टोमस्य तन्त्रे कल्पयित्वा तैर्ज्योतिष्टोमव्यपेतैस्तत्प्र-भृतिभिः संवत्सरं पूर्वपक्षेषु यजेत ७ त्रयोदशे पूर्वपक्षे वाज-पेयेनेष्ट्वैतैरेवावृत्तैरपरं संवत्सरम् ८ ता यथोत्साहदक्षिणाः स्युः ९ राजसूयेत यजेतेति लामकायनः १० त्रिवृत्पञ्चदशोऽभ्यारोहणीयस्य स्थाने स्यात् ११ वाजपेयोऽभिषेचनीयस्य १२ पञ्चदशं

त्रिवृत्केशवपनीयस्य १३ व्युष्टिक्षत्रधृत्योर्ज्योतिष्टोमः १४ बृहस्पति-सवेनैव पुरस्तादुपरिष्टाच्च परियजेतेति शाण्डिल्यः १५ मासमात्रे पुरस्ताज्ज्योतिष्टोमेन तथोपरिष्टादिति धानंजय्यः १६ प्रत्यवरोहणी-येनैवान्ततो यजेत नैतेषां केनचिदिति गौतमः १७ सदस्यसप्तदशान् पृथगृत्विजो वृणीत १८ तस्य दक्षिणा दासीनिष्करथहस्तियानगवां पृष्ठ्यानां चाश्वानां सप्तदशैकैकस्य जातस्य १९ सहस्राणि गवां शतानि वा २० सप्तदश वैव गावस्तं कुरुवाजपेयः इत्याचक्षते २१ ताः सममृत्विग्भ्यो विभजेत् २२ श्रेष्ठतो वा मध्यतःकारिभ्यः २३ येन रथेनाजिं धावेत्तमुद्गात्रे दद्यादासन्दीं च सास्तरणां यामभिषिक्त आरोहेत् २४ बस्तचर्म सरुक्मं होत्रे यस्मिन्नासीनोऽभिषिच्येत २५ वसनमयी रशनाध्वर्यवे २६ हिरण्यस्थालं मधुना पूर्णं ब्रह्मणे २७ कंसस्थाले वा हिरण्यतुषान्मधुमिश्रान् २८

इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

तस्य व्रतानि १ क्षत्रवृत्तिं वर्तयेत् २ प्रत्यवरोहणाभिवादने जघन्य-व्रज्यां समानशय्यतामिति च वर्जयेदवाजपेययाजिभिः ३ यथावयसं वाजपेययाजिभिः ४ प्रत्यवरोहणीयेनेष्ट्वा नैतानि व्रतानि चरेदिति शाण्डिल्यायनः ५ तस्य विकल्पाः ६ प्राकृत एव वाजपेय एकि-प्रभृतिद्व्युत्तरान् सप्तदशत्रयस्त्रिंशान्तान् स्तोमान् कल्पयेत्स मयूरो नेकर्षी ७ तस्योपास्मै गायता नर ति बहिष्पवमानम् ८ ब्रह्म-सामैव प्रत्येतेन स्वर्गलोकमाक्रमत इति शाण्डिल्यः ९ ज्योतिष्टोमो वातिरात्रोऽषोडशिकः १० अनतिरात्रो वा षोडशिमान् ११ तस्य बृहत्सप्तदशं स्तोत्रं स्यात् । पञ्चदशस्तोमं स्वासु १२ अग्निष्टोमो वा १३ तस्याभीवर्तो ब्रह्मसामानुष्टुभि यज्ञायज्ञीयमनुकल्पयेद्बृहदग्नि-ष्टोमसाम पञ्चविंशं पृष्ठानां ब्रह्मसामाच्छावाकसाम वा चतुर्विंशमितरत् १४ एतस्य वैव चतुस्त्रिंशानि पृष्ठान्यग्निष्टोमसाम च सप्तदशमितरत्सर्वम् १५ नैतेषां कश्चन वाजपेय इति गौतमः १६

यजमानश्चैतेषु न वाजपेय दक्षिणा दद्यादिति दद्यादिति १७
इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले चतुर्थः खराडः ४

पञ्चविंशः पटलः । प्रथमः खराडः

राजा राजसूयेन यजेत १ फाल्गुनी पक्षस्य प्रथमायां दीक्षेताभ्यारोहणीयाय ज्योतिष्टोमाय २ तस्यैका दीक्षा द्वादशशतं दक्षिणाः ३ संवत्सरादूर्ध्वमभिषेचनीयेन यजेत ४ तस्य तथैव दीक्षा । द्वे इति गौतमः ५ तथा सत्यभ्यारोहणीयस्यापि द्वे ६ एकाभ्यारोहणीयस्य तिस्रोऽभिषेचनीयस्येति शारिडल्यः ७ त्रयोदश्यां त्वपरपक्षस्य दीक्षेत ८ तस्य दक्षिणा द्वात्रिंशतं सहस्राणि मध्यतःकारिभ्यो दद्यादेकैकस्मै ९ षोडश प्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिभ्यस्ता अर्द्धिन्यः १० अष्टौ प्रतिहर्तृ पोतृनेष्ट्रच्छावाकेभ्यस्तास्तृतीयिन्यः ११ चत्वारि सुब्रह्मरयाग्नीध्रोन्नेतृग्रावस्तुद्भ्यस्ताः पादिन्यः १२ अबलानस्य ज्ञातीन्सवित्तानावहेयुस्ताञ्जिनीयाद्दक्षिणावेलायाम् १३ इषूंश्चैभ्योऽस्येत् १४ तांस्त एव प्रत्याहरेयुर्विजस्यस्व राजन्निति १५ तेषां वित्तस्य तृतीयमृत्विग्भ्यो दद्यात् १६ दशपेयेऽनुप्रसर्पिभ्यस्तृतीयम् १७ शेषं तेभ्य एव प्रत्युत्सृजेत् १८ ग्रामानेभ्योऽपि दद्यात् १९ राजन्यास्ते स्युस्तत ऊर्ध्वमनभिषेक्याः २० तेनेष्ट्वा न साक्षादवभृथमभ्यवेयात् । कृष्णविषाणं कृष्णाजिनपादं वा निदध्यात् २१ वाराहीभ्यामित उपानद्भ्यां व्रजेत्कार्ष्णीभ्यां प्रत्याव्रजेत् २२

इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले प्रथमः खराडः

द्वितीयः खराडः

तद्दीक्षित एव दशाहे ततो दशपेयेन यजेत १ तस्य ब्राह्मणं दश दश चमसमभियन्तीति ब्रह्मरयचतुर्था उद्गातृचमसं भक्षयेयुः षट्सु चान्ये २ एवमितरेषामेकैकं यावता दश पूर्येरन्यजमान चमसादन्यान् ३ ते दश मातृदश पितृनित्यन्वाख्याय प्रसर्पेयुरादशमात्पुरुषादिति ह्याह ४

यत्राब्राह्मणीमधिगच्छेयुर्ब्राह्मरयैवाभ्यासं दश तं पूरयेयुः ५ अस्मरन्तश्च यतः स्मरेयुः ६ ऋत्विगभिः सह धिष्णयानुपतिष्ठेरन् ७ स्रगुद्गातुरिति स्रप्स्यतेऽस्मै बहिष्पवमानं हिररयस्रजं त्रिपुष्करां प्रतिमुञ्चेत् ८ आस्ताव उपविष्टाय यजमान औदकीं द्वादशपुष्करां यास्य वा स्यात् ९ स्तुते बहिष्पवमाने यजमानायैवौदकीं प्रत्युत्सृजेत् १० इतरया प्रतिमुक्तया सर्वमहः कुर्वीत ११ तां स एवाहरेत् १२ प्राकाशावध्वर्य्वोरिति सौवर्णोऽध्वर्योर्दक्षिणतः स्याद्राजतः प्रति- प्रस्थातुः सव्यतः १३ वासः पोतुरिति कार्पासं स्यात् १४ वरासी नेष्टुरिति क्षौमी स्यात् १५ ब्राह्मणेनैवेतरा विज्ञाताः १६ तस्या- वभृथादुदेत्य संवत्सरं देवव्रतं चरेत् १७ उन्मृन्नीतानाप्लवमानः १८ धावेत दन्तान्निकृन्तयेन्नखानि श्मश्रूणि वापयेत न केशान् १९ वैयाघ्रे चर्मरयुत्तरलोम्नयग्न्यगारे संविशेत् २० अहरहः समिध आदध्यात् २१ नानु ग्रामं प्रविशेत् २४ नास्याब्राह्मणा राष्ट्रे वापयेरन् २३ आश्वानां च न केशांश्छिन्द्युः २४ न तेजनीदन्तान् २५ न प्रस्रवणानि २६ ब्राह्मणास्तु यथाभिप्रेतं ये च ताननु स्युः २७

इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले द्वितीयः खराडः २

## तृतीयः खराडः

संवत्सरादूर्ध्वं केशवपनीयाय दीक्षेत । यस्मिन् कालेऽभिषेचनीयेन यजेत १ तस्य पौर्णमास्यामतिरात्रः २ दशपेयेनेष्ट्वा य उत्तरः पूर्वपक्ष- स्तस्मिन्नेव केशवपनीयेन यजेतेति धानंजय्यः ३ पौर्णमास्यां चैवातिरात्रः ४ तस्य सहस्रं दक्षिणाः ५ तस्योदवसानीययेष्ट्वा पौर्णमासेन व्यष्टिद्विरात्राय दीक्षेतामावास्यायां पूर्वमहरिति चेच्चिकीर्षेत् ६ पौर्णमास्यामिति चेत्पूर्वपक्ष एव दीक्षेत ७ उभयोर्विचारयोर्यजनीय उत्तरमहः ८ व्यष्टकायामुत्तरमिति तामिस्र- प्रथमास्तिस्रो व्यष्टका इत्याचक्षते ९ उभे एव पूर्वपक्षे स्यातां ये एव समानपक्ष इति ह्याह १० पूर्वेणैव दक्षिणा व्याख्याताः ११ तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेतावकाशश्चेत् स्यात् १२ अविद्यमाने य

उत्तरः पूर्वपक्षस्तस्मिन् १३ सोऽभ्यारोहणीयेन व्याख्यातः १४ तयोः पृथक्सहस्रे दक्षिणा इति गौतमधानंजय्यौ १५ द्वे च सहस्रे केशवपनीये १६ तथा व्युष्टौ १७ चत्वार्यभिषेचनीये गौतमः पञ्च धानंजय्यः १८ नित्यं त्वबलानां ज्ञातीनां वित्तम १९ राज्येक-विंशतिवर्गान्यथोत्साहं दद्याद् २० ऐन्द्रेण त्वृषभेण पुरस्तादुपरिष्टाच्च परियजेत २१ राजा राज्यमिच्छन्नेतेन यजेत २२ विराजि दश वर्गान्यथोत्साहं दद्याद् २३ आग्नेयेन तु पशुना पुरस्तादुपरिष्टाच्च परियजेत २४ वैश्वदेवेनौपशदे २५ तस्य चतुर्विंशशतं दक्षिणाः २६ पूर्वे वयस्युच्चावचान्याजयित्वोपनीय वा तेभ्यः समावर्त्स्यन् पुनःस्तोमेन यजेत २७ तस्य द्वादशमिथुना दक्षिणा इति धानंजय्यः २८ पुनः संस्कृतो रथः पुनरुत्स्यूतं शामूलं पुनर्धेनुः पुनर्वत्स इति शाण्डिल्यः २९ एतेषां यथोत्साहं दद्यात् ३० चतुष्टोमयोरेकशफानां पूर्वस्मिन्यथोत्साहं दद्यात् ३१ उभयेषामुत्तरस्मिन् ३२

इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

उद्भिद्बलभिद्भ्यामविप्रयोगेण यजेत १ तावुभौ सप्तापवर्गौ स्याताम् २ वसन्ते चार्द्धमास एनावन्तरेण स्यात् ३ मासः संवत्सरो वा ४ तत्रेषुरिष्टिः ५ तयोः पृथक् चतुर्युजावश्वरथावपचित्योरुभयतः कांस्यकवचौ ७ शतार्हाः स्युरश्वाः शतक्रियो वा ८ राजैताभ्यां यजेतेति शाण्डिल्यः ९ यः कश्चापचितिकाम इति धानंजय्यः १० ऐकाहिकेन व्रतेनोक्त उपायोऽग्नेः स्तोमयोः ११ तयोः पृथक्चत्वारि धान्याचितानि दक्षिणाः १२ षड्गवानि पूर्वे चतुर्गवाण्युत्तरस्मिन् १३ ऋषभाणां द्वादशशतं दक्षिणाः सहस्रं वर्षभे १४ अविद्यमानेषु कतिचिद् अप्यृषभाः स्युः साण्डा इतरे वत्सतराः १५ वैश्यं यं विशः सराजानः पुरस्कुर्वीरन् स गोसवेन यजेत । स बृहस्पतिसवेन व्याख्यातः १६ अयुतं त्वस्य दक्षिणाः १७ सखायो भ्रातरो वा ये सम्पादयेयुस्ते मरुत्स्तोमेन यजेरन् १८ तस्य दक्षिणा यथारूपाः

पञ्चशारदीये प्रशव आलभ्यन्ते । तेषां यथोत्साहं दद्युः १९ येषां केषां चेति धानंजय्यः २० कुलदक्षिण इन्द्राग्नयोः कुलायः २१ सहस्रमिन्द्रस्तोमे २२ राजपुरोहितौ यजेयातामिन्द्राग्नयोः स्तोमेन २३ गायत्रीसंपन्ना दक्षिणा ब्राह्मणो दद्याज्जगती संपन्ना राजा २४ कामं तु पृथग्यजेयाताम् २५ तयोरेवमेव दक्षिणाः २६ विघनाभ्यां पशुकामो यजेताभिचरन्वा २७ सोमसामाथर्वणं वेत्याथर्वणं पशुकामस्य यज्ञे कुर्यात् सोमसामाभिचरतः २८ बृहतीसंपन्ना दक्षिणाः पशुकामस्य २९ इषुणाभिचरतो व्याख्यातौ ३० संदंशवज्रौ च ३१ राजानं संदंशेनाभिचरेज्जनपदं वज्रेण ३२ राजानमभिचरन्व्यत्यासमेनौ प्रयुञ्जीत ३३ ज्योतिष्टोमेनैवान्ततो यजेत शान्त्यर्थः शान्त्यर्थः ३४

इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले चतुर्थः खण्डः ४

## षड्विंशः पटलः । प्रथमः खण्डः

पौर्णमासीदीक्षामासापवर्गा अहीनाः १ तेषां द्वादशोपसदः । षडिति धानंजय्यः २ एकविंशेऽहनि यज्ञपुच्छं त्रिंशे वा ३ सत्याभ्युच्चये दीक्षाप्रतिह्रासः ४ सर्वेऽतिरात्रा अहीना द्विरात्रप्रभृतयश्चाहर्गणाः ५ अन्यत्र चातुर्मास्यराजसूयाभ्याम् ६ ऋक्समाम्नायान्तरायादहीन-वैधर्म्याच्च ७ तेषां रात्रेर्विशेषः पन्यं पन्यं श्रौतकक्षं दैवोदासं होतृषाम कौत्सस्य लोक आष्टादंष्ट्रं त्वामाविशन्त्विति ८ अश्वमेधादन्ये सहस्रदक्षिणाः प्राक् चतूरात्रेभ्यः ९ तत्प्रभृतीनां भूयस्यः सुत्या-भ्युच्चयेन १० त्रयस्त्रिंशता त्रिभिश्च शतैरित्येके कृतान्तदर्शनात्त्रिरात्रे ११ पञ्चविंशं शतं सहस्रं चोपजत इत्यपरम् १२ एवमयुतोपपत्तिः पौण्डरीके १३ ताः समं सर्वेष्वहःसु विभाजन् दद्यात् १४ समा-नुपपत्तावुत्तमेऽहनि भूयिष्ठाः १५ अयुतमेकादशरात्रे दद्यान्नवनव पूर्वेष्वहःसु शतानि सहस्रमुत्तमे १६ त्रिरात्राणां प्रथमेऽहनि वषट्कारिभ्यो दद्यात् । ग्रावस्तुते च १७ छन्दोगेभ्य उत्तमे १८ मध्यम इतरेभ्यः १९ शतमेकैकस्मैमध्यतः कारिभ्यो दद्यात् २० पञ्चाशतमर्द्धिनीभ्यः २१ तृतीयिनीभ्यो विंशतिं पोत्रे तथा नेष्ट्रे त्रिंशतम्

इतराभ्याम् २२ आग्नीध्राय च २३ पादिनीभ्यो नवोन्नेत्रे दशेतराभ्याम् २४ अन्वहं उन्नेत्रे समं दद्यात् २५

इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

दश सदस्याय प्रथमेऽहनि सप्ततिं द्वितीये विंशतिं तृतीये १ दश दशार्षेयप्रवादिभ्यो य उक्ता ब्राह्मणेन २ अनूचानौ पूर्वयोरह्नोरननूचान उत्तमे ३ दश शतं शिष्यन्ते । ता ऋत्विग्भ्यो दद्यात् । प्रसर्पकेभ्यो वा ४ सहस्रतमीं षोडशकलां मध्यमेऽहनि ब्रह्मण आग्नीध्राय च ५ शुक्लं कृष्णं रोहितमित्यस्या रूपाणि ६ दश कला ब्रह्मणे । पञ्चाग्नीघ्राय ७ एकाममा कुर्वीत ८ तामन्यया गवा निष्क्रीय काम्यासीत्यनुमन्य दक्षिणे वास्याः कर्णे जपित्वा गोष्वपि सृजेत ९ ज्योतिष्टोमविधिरनन्तराम्नानात् द्वादशाहाङ्गभूतः स्यात् १० तल्लिङ्गदर्शनाच्च यथा पृष्ठानाम् ११ पुनराम्नानाच्चाहीनैकाहादौ १२ नाना प्रकरणवत्तु चोदितानामानन्तर्यात्संबन्धो न स्याद्यथोपहव्य-र्तपेययोः १३ लिङ्गग्रहणं चान्यार्थेन यथा षष्ठेऽहनि शक्वरीणाम् १४ शेषविधिः पुनराम्नानम् १५ तस्मिन् स्वतन्त्रेऽहीनरात्रिः स्यादविशेषेण ह्यहीनेषु चोद्यते १६ प्राकृती त्वेव स्यादधिकृत्याम्नानात् १७ अविशेषचोदना शेषे यथा चतुरवत्तम् १८ एतेनोंकास्योक्तं प्रत्याम्नानं वाचा रथन्तरे १९ असंभवाच्च शब्दार्थस्य २० समुच्चयो वै तयोरपघाटिलावत् २१ वागित्यादेयमिति देशविपर्ययमात्रम् २२ यथा वामदेव्ययज्ञायज्ञीययोः २३

इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले द्वितीयः खण्डः २

तृतीयः खण्डः

अप्तोर्यामे कृता गर्भाः कल्पेन १ रथन्तरं वा पृष्ठं तस्य स्थाने वार्हतं वाजिजित् २ बृहद्वारवन्तीये उत्तरे पृष्ठे ३ कालेयस्यर्त्तु वारवन्तीयम् ४ तस्य स्थाने पूर्वम् ५ समन्तस्य च कालेयं पार्थस्य चौशनम् ६

त एव गर्भाः पृष्ठेषु ७ वैश्वजितान्याज्यान्याज्येषु गर्भान् कुर्यादिति धानंजय्यः । षाष्ठिकान्युक्थान्युक्थेषु ८ यथैवार्षेयकल्पेन शाण्डिल्यः ९ ज्योतिष्टोमे वातिरात्रेऽतिरिक्तस्तोत्रारण्यादध्यात् षोडशिमतीति १० त एव गर्भाः पृष्ठेषु यज्ञायज्ञीयं च बृहद्गर्भम् ११ एकस्तोमेषु बैदत्रिरात्रे च स्वस्तोमातिरात्रिः स्यात् । तथा संधिः १२ उभयं ह्यविकारेण वर्तते १३ पराक्त्वं च त्रिवृतोऽन्यत्र संधेर्नोपपद्यते १४ त्रिवृतातिरात्रेणेत्यविशेषचोदना १५ वृत्त्यपेक्षा चादेशे न विद्यते । यथा षोडशं प्रथमं रात्रिषामेति १६ तद्वैदोत्तमेऽप्याचार्या मध्यम इत्येके १७ अर्थोक्तः संधावावापोऽभ्यासो वा १८ अनुब्राह्मणं वेति प्रकृत्यन्वयादेकविंशाः १९ अहस्तोमस्त्वधिकारात् २० न चैकस्मिन्नन्विति भवति २१ ज्यायांश्चोक्थेभ्य एकविंशः स्यादन्याय्यम् २२ संपन्नित्येति शौचिवृक्षिः २३ एकविंशपञ्चदशौ मध्यमयोरहस्तोमावितरयोः २४ ब्राह्मणमाज्यदोहानामग्निमुपनिधाय स्तुवत इति २५ होतुर्धिष्ण्येऽग्निं धारयेयुः । प्रथमेऽहनि यं मध्यंदिन आनयेयुः २६ प्रातः सवन उत्तरयोः २७ स्तोत्रवेलायामेनं प्रज्वलयेयुः २८

इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

सहस्रपोषकामः शबलीहोमं कुर्वीत १ नात्रिरात्रयाजीति धानंजय्यः २ त्रिरात्रो वा एतां प्रदापयतीति ह्याह ३ यः कश्च सहस्रपोषकाम इति शाण्डिल्यः ४ योऽलमन्नाद्याय सन्नथान्नं नाद्यादिति ह्याह ५ वसन्ते प्रथमायां पूर्वपक्षस्य केशश्मश्रूणि वापयित्वाहतं वसनं परिधाय तप्तं क्षीरं पिबेद् द्वादशरात्रीरधः शयीतानन्तर्हिते स्थण्डिले ६ नित्याभ्याहितोऽस्याग्निरावसथे स्यात् ७ नैनमन्यः सुहृदः प्रैषकृतोऽनुविशेत् ८ अल्पव्याहारी च स्यात् ९ अदूरगामी १० द्वादश्या उपव्युषं परिसमह्याग्निं परिस्तीर्यौदुम्बर इध्मः स्यात्स्रुक्स्रुवं च तथा चमसस्तस्मिन् दधिमधु सर्पींषि समानीय स्रुवेण स्रुचि गृह्णीयाच्चतुर्गृहीतमष्टगृहीतं वात्र जुहुयाच्छबली समुद्रोऽसीति ११

स्वाहाकारेणोत्तराम् १२ स्रुचि यः शेषः स्यात्तं चमस आनीय प्राश्नीयात् १३ प्रक्षाल्य स्रुक्स्रुवं चमसं निदध्यात् १४ तत्रैवानु-प्रहरेदिति शाण्डिल्यायनः १५ प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य यत्र ग्राम्यस्य पशोर्नाश्रृणुयात्तदरण्यं परेत्य तत्र दर्भस्तम्बमालभ्य शबली शबलीति त्रिष्परमकण्ठेन क्रोशेत् १६ यदन्यः शुनो गर्दभाद्वा प्रतिवाश्येत समृद्धं कर्मेति विद्यात् १७ एवमातृतीयं संवत्सरा-भ्यासमप्रतिवाश्यमाने कुर्वीत १८ प्रथमतश्चेत्तु श्वा गर्दभो वा प्रतिवाश्येत न पशूनामाशास्तीति विद्यात् १९ आतृतीयं चाप्रति-वाश्यमान आशा पशूनाम् २० शान्तिर्वामदेव्यं शान्तिर्वामदेव्यम् २१

इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले चतुर्थः खण्डः ४

सप्तविंशः पटलः । प्रथमः खण्डः

राजाप्रतिघोऽश्वमेधेन यजेत १ तस्योपायो यथा महाव्रते गौतमीयम् २ उपसदस्त्वस्याहीनिक्यः ३ दीक्षित्वाश्वमुत्सृजेच्छ्वेतम् ४ कृष्णमण्डलमक्षणो रूपम् ५ यो जवेन संपन्नः ६ तमनावर्तयन्तो दिग्भ्यः संवत्सरं रक्षित्वा राजक्रये बध्नीयुः ७ ग्रीष्म उपक्रमेति धानंजय्यः वसन्त इति शाण्डिल्यः ८ चैत्रवैशाखयोरन्यतरस्य सप्तम्यामष्टम्यां वा मध्यतःकारिण ऋत्विजो ब्रह्मौदनं भोजयित्वा तेभ्यः पृथक्सहस्राणि दद्यादिति ९ पौष्णयामिष्टौ विततायां संस्थितायां वाश्वमुत्सृजेत् १० तत्र तिस्र इष्टयः सावित्र्यो भवन्ति १२ तासु संस्थितासु दक्षिणत आहवनीयस्य हिरण्मये कूर्चे प्राङ्मुख आसीनो यजमानस्तथा होता १३ संवत्सरमहरहर्होतुः पारिप्लवमा-चक्षाणस्य शृणुयात् १४ पुरस्तादध्वर्युः प्रत्यङ्मुखो हैरण्ये फलके १५ हिरण्यकशिपुन्यासीनो ब्रह्मोद्गाता चोदङ्मुखौ १६ शतं होत्रे दद्याद्दशाध्वर्यवे सहस्रं वा होत्रे शतमध्वर्यवे १७ किंचिच्चेतराभ्याम् १८ तस्य देवव्रतानि यथा राजसूये १९ संवत्सरादूर्ध्वमश्वं बध्वा दीक्षेत २० तदहरेतान्यृत्विज आसनानि यथास्वं हरेरन् २१ तस्य

द्वादश दीक्षास्तथोपसदः २२ सर्वेषामह्नां बहिर्बहिष्पवमानैः स्तुवी-रन् २३

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले प्रथमः खण्डः १

## द्वितीयः खण्डः

मध्यमेऽहन्यश्वस्य बालधिमालभ्य बहिष्पवमानं सर्पेयुः १ सर्पत्सु यजमान उद्गातारं ब्रूयादुद्गातरुप त्वा वृणे शतेन निष्केण चाश्वो ममोद्गास्यतीति २ अश्वमास्तावमाक्रमय्य बडवां दर्शयेयुः ३ तां यदाभिक्रन्देदथ यजमान उद्गातारं ब्रूयादुद्गातरुप त्वा वृणे शतेन चैव निष्केण च त्वमेव ममोद्गास्यसीति ४ उदञ्चमश्वमुत्क्रमय्यास्ताव उपविश्योद्गाताश्वव्रतेन स्तुयादभिवाजी विश्वरूप इति तृचेन ५ हिरण्यकशिपुन्यासीनो बहिष्पवमानेन स्तुत्वा स एव तद्धरेत् ६ या पत्नीनां प्रियतमा यजमानस्य सा वावता ७ राजपुत्र्यनपचिता परिवृक्ती ८ संज्ञप्तेषु पशुषु होत्राभिमेथिते ब्रह्मा वावतामभिमेथेत् ९ ऊर्ध्वामेनामुच्छ्रापय गिरौ भारं हरन्निवाथास्यै मध्यमेधतां शीते वाते पुनर्निवेति निर्दिशेत् १० शतमस्या राजन्यानां दुहितरोऽनुचर्यः स्युः । तास्तं प्रत्यभिमेथेयुरूर्ध्वमेनमुच्छ्रयतात् गिरौ भारं हरन्निवाथास्य मध्यमे जतु शीते वाते निर्दिशेयुः ११ उद्गाता परिवृक्तीमभिमेथे-द्यदस्या अंशुभेद्याः कृधुस्थूलमुपातसन्मुष्काविदस्या एजतो गोश-फेशकुलाविवेति निर्दिशेत् १२ शतमस्याः सूतग्रामणीनां दुहितरो-ऽनुचर्यस्तास्तं प्रत्यभिमेथेयुर्यद्देवासो ललामगुं प्रविष्टिमिनमाविषु-रिति निर्दिशेयुः १३ सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथेति १४ अप उपस्पृश्य वामदेव्यं गीत्वा तस्यर्चोऽनुजपेयुः १५

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

स्वाहाकृतिभिश्चरिते पूर्वेण सद उपविश्य ब्रह्मोद्यं वदेयुः १ होत्राध्वर्युणा चोक्ते ब्रह्मा पृच्छेदुद्गातारं पृच्छामि त्वा चितये देवसख

यदि त्वमत्र मनसानुवेत्थ येषु विष्णुस्त्रिषु पदेष्वस्थात्तेषु विश्वं भुवनमाविवेशाऽऽइति २ तं प्रतिब्रूयादपि तेषु त्रिषु पदेष्वस्मिन् येषु विश्वं भुवनमाविवेश सद्यः पर्यैमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठमिति ३ उद्गाता पृच्छेद्ब्रह्माणं किंस्विदन्तःपुरुष आविवेश । कान्यन्तः पुरुषे अर्पितानि । एतद्ब्रह्मन्नुपवहलामसि । त्वा किंस्विन्नः प्रतिवोचाम्यत्रेति ४ तं प्रतिब्रूयात् पञ्चस्वन्तः पुरुष आविवेश । तान्यन्तः पुरुषे अर्पितान्येतत्त्वात्र प्रतिमन्वानो अस्मिन्न मायया भवस्युत्तरोमदिति ५ सर्वे यजमानं पृच्छेयुः । पृच्छामस्त्वा वृष्णोऽश्वस्य रेतः । पृच्छामो वाचः परमं व्योमेति ६ तान् प्रति ब्रूयादियं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः । अयं सोमो वृष्णो अश्वस्य रेतः ब्रह्मायं वाचः परमं व्योमेति ७ तस्य दक्षिणाः सहस्रं प्रथमेऽहनि दद्यात्तथोत्तमे ८ मध्यमेऽहन्येकजनपदे यदब्राह्मणानां वित्तं तद्दद्यात् ९ विजितस्य वा मध्ये यजेत १० प्राचीं होत्रे दिशं दद्याद्दक्षिणां ब्रह्मणेऽध्वर्यवे प्रतीचीमुदीचीमुद्गात्रे ११ यदन्यत्क्षेत्राच्च पुरुषेभ्यश्चेत्युभयोर्विचारयोः १२ यावद्वा ब्रूयुर्नेतो भूय इच्छाम इति १३ अष्टाचत्वारिंशं शतं वा सहस्राणि मध्यतः कारिभ्यः दद्यादेकैकस्मै चतुर्विंशतिमर्द्धिनीभ्यो द्वादश तृतीयिनीभ्यः षट् पादिनीभ्यः १४ अवराध्यां एताः कामं तु भूयसीर्दद्यात् १५ तस्य विकल्पाः १६ एतान्येव पञ्चदशस्तोमान्यहानि कल्पयेत् १७

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

स पतन्तकोऽश्वमेधः १ तस्याद्यबहिष्पवमाने वैष्णवीरनुष्टुभस्तिस्र-श्चतुर्धाकारमावपेत् २ पूर्वस्मिन् दृष्टान्ताद्यद् वैष्णव्यस्तिस्रश्चतस्र इति ह्याह ३ अयुक्त्वसंभवात्तु गायत्रीः पवमानीरावपेत् ४ प्राकृतौ दृष्टान्तात्तद्धि कारणम् ५ समर्थं च यद्वैष्णव्यस्तिस्रश्चतस्र इत्यादौ करणात् ६ सर्वं वा बहिष्पवमानं गायत्रीषु ७ चतुष्टोम कारितो हि व्यूहः ८ अर्द्धमासमश्वं चारयित्वैतेन त्यजेत ९ ज्योतिष्टोमो वै

तस्यातिरात्रस्तृतीयमहः स्यात्तेन मासम् १० गौर्वा तेन त्रीन् ११ आयुर्वा तेन षट् १२ प्राकृतस्य वैतेषामह्नां किंचित्तृतीयमहः स्यात् १३ विश्वजिदभिजिद्व्रताप्तोर्य्यामाणां वातिरात्राणामेव १४ तेषां स्तोमचोदनैव स्याद्यथा चतुष्टोमसर्वस्तोमयोः १५ द्विरात्रत्रिरात्रेषु च तन्त्रविलोपो न विद्यते । ब्राह्मणशब्दसामर्थ्यात् १६ तेनैव जगती कृता ताभ्यां द्विरात्रमतन्वतां तमेतैः सामभिरभिषज्यन्नित्येतद्वै त्रिरात्रमकर्यदेतानि रूपाण्यन्वहमाज्यदोहानि १७ असंचारान्निकायित्वाच्च १८ अस्तीव त्रिरात्रस्य प्रथममहरस्तीवोत्तमं च्छिद्रमिव मध्यत इति चान्वयदर्शनात् १९ प्राकृतास्त्वेव स्युः । कृतलक्षणा हि पुरस्ताच्चोद्यन्ते २० यथा व्रतवति पञ्चरात्रे षडहनवाहयोरायुष्कामस्यैन्द्रे च सप्तरात्रे २१ प्रत्यक्षविकारात् स्तोमचोदना यथा चतुष्टोमसर्वस्तोमयोः २२ वचनात्तन्त्रलोपो यथाजामि कल्पः सर्वस्वारे २३ चतुष्कप्रभृतयश्चतुरुत्तरा अष्टाचत्वारिंशान्ताः प्रथमस्याह्नः स्तोमाः स्युरिति लामकायनः २४

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले चतुर्थः खण्डः ४

## पञ्चमः खण्डः

स गोविनतोऽश्वमेधः १ एवं सर्वच्छन्दोमं प्रथममहः सर्वपशुमध्यमं सर्वस्तोममुत्तमम् २ षडधिका विराट् ३ तां चेच्चिकीर्षेत्त्रिणवमुक्थमेकविंशं कुर्यात् ४ स्तोमप्रत्यवरोहान्नैवं शाण्डिल्यः ५ अश्वमेधेनेष्ट्वा संवत्सरमृतावृतौ षड्भिः षड्भिः पशुबन्धैर्यजेताग्नेयैरैन्द्रैर्मारुतैः पार्जन्यैर्वा मैत्रावरुणैरैन्द्राबार्हस्पत्यैरैन्द्रावैष्णवैरिति ६ त्रयोदश्यां त्वपरपक्षस्य दीक्षेत जामदग्न्याय तस्य विंशतिर्दक्षिणा द्वादशोपसदः ७ तत्रोपसत्सु पृथग्घोमानध्वर्युर्जुहुयात् पुरोडाशांस्त उक्ता ब्राह्मणेन ८ समानदेवतौ पूर्वाह्णापराह्णयोः ९ अग्नेर्वैर्होत्रमित्येतत्प्रभृतय एषां होमाः १० तस्यावभृथादुदेत्य द्वादशाहमिष्टिभिर्यजेत ११ तास्वेत एव प्रतिलोमाः पुरोडाशाः १२ वसिष्ठस्य जनित्रे भवत इति संसर्पत्सु चतुर्थेऽहनि बृहत्यनुष्टुभोः पृथगनु-

पूर्वमनुकल्पयेत् १३ चतुर्थं हि जनित्रस्थानम् १४ राथन्तरबृहत्योर्वा सच्छन्दस्त्वात् १५ वासिष्ठं प्रजननोक्तं च रथन्तरम् १६ बार्हतयोरित्येके १७ तयोर्विकल्पः स्यादार्षेयकल्पेन १८ पञ्चशारदीये पशुबन्धैर्यजेत । त उक्ता ब्राह्मणेन १९ सप्तम्यामष्टम्यां वाश्वयुजि पक्षस्य २० वत्सतरीरालभेरन्नुक्ष्णो विसृजेयुः २१ तेषां यावन्तो भ्रेषमाप-द्येरंस्तावतोऽन्यानयजुष्कृतानपि सृजेत् तथारूपांस्तद्वर्षान् २२ षष्ठ्यां शरदि कार्त्तिके मासि यजेत । तस्य द्वादशोपसदः २३

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले पञ्चमः खण्डः ५

## षष्ठः खण्डः

परयोः षड् रात्रयोर्द्वितीयेऽहनि पार्थं गौतमः समूहात् १ संचारप्रसङ्गाच्च पौण्डरीके २ वासिष्ठं शाण्डिल्योऽप्रयोगात् षष्ठे ३ संचाराच्च समूढरूपिणि ४ तृतीये षड्रात्रे पञ्चमस्याह्नः प्रत्यवरोही-ण्युक्थानि स्युरित्याचार्य्याः ५ अभ्यासङ्गो ह्यत्र यथा देवानां पञ्चरात्रे ६ त्रिणवानि वानुक्तत्वात् ७ रात्रिकारितः स्तोमः प्रत्यवरोह इति गौतमः ८ सवनशेषत्वादुक्थानि त्रयस्त्रिंशान्येव स्युरिति ९ सप्तरात्राणां प्रथमस्यातिरात्रे पञ्चविंशान्यहस्तोमत्वात् १० एक-विंशानि तु ज्योतिष्टोमप्रदेशात् ११ स्तोमान्वयीनीति सप्तदशानि स्युरधिकारात् १२ यथा च स्तोमान्वयी षोडशीत्येकविंशः १३ एकविंशानि प्रकृतिस्तोमान्वयात् १४ पञ्चविंशानि शौचिवृक्षि-स्त्रिणवं वाद्यं षोडशिना च स्तोमान्वय इति १५ पौण्डरीकचतुर्थे षोडशिषष्ठाभावाद्यथा क्षुल्लकजामदग्न्ये १६ क्रियमाणे चैकविंशे स्वाराज्योक्तानां बृहतीनामेकविंशं शतं क्रतुः १७ अषोडशिकेन तु प्रदेशो न स्यात् १८ विराडपाये चापैत्यन्यासु वा १९ अनपायात् क्षुल्लकजामदग्न्ये २० संपदचोदिता २१ उपपन्ना च दशरात्रे २२ क्लृप्तश्च षट्त्रिंशःषट्शतं हि बृहत्यः २३ चतुष्टोम इति ज्योतिष्टोमसंस्थानियमात् २४ प्रकृतिप्रत्ययाद्विशये २५ गुणात्तु पूर्वं चातुष्टोम्यं तस्मिन्नपूर्वं पशुकामयज्ञे २६ तत्प्रत्यये न्यायो विशये २७

अग्निष्टोमसामैकतृचे संस्थानियमात् २८ चतुर्षु नाग्निष्टोम इति वचनात् २९ यथा चाश्वत्रिरात्रे ३० सर्वेष्वत्यग्निष्टोमस्थानकल्प- नादिति वचनादाचार्याः ३१ न तथाश्वत्रिरात्रः ३२ अनादेशे प्रकृतेः ३३ द्वादशस्तोत्रत्वादग्निष्टोमः इति ३४ अहीनयाजनं न कार्यम् । बह्वृचतैत्तिरीयकब्राह्मणे हि निन्दा ३५ अहिर्ह्येनमेष भूत्वा यज्ञक्रतुर्गिरति । योऽहीनेन याजयतीति ३६ विधेस्तु याजनम् ३७ ज्येष्ठं ज्यैष्ठिनेयमभिचर्यमाणं चित्ररथं कापेया इति च ब्रुवन्न दोषमाह ३८ यथा ये मृताय कुर्वन्तीति ३९ उभयोरार्भुवनृत्विग्यजमाना इति ब्राह्मणम् इति ब्राह्मणम् ४०

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले षष्ठः खण्डः ६

अष्टाविंशः पटलः । प्रथमः खण्डः

दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुः १ तेषा- मेकस्यानुपपत्तौ क्रयोऽपरपक्षे स्यात् २ प्रसवश्च । यदि द्वे ३ त्रिषूत्थानमेव पूर्वपक्षे स्यात् ४ तेषां द्वादश दीक्षास्तथोपसदोऽनादेशे ५ सांवत्सरिकेभ्यश्च ६ ऊर्ध्वं दीक्षाणां याथाकामी ७ प्रथमे पञ्चदशरात्र एकान्नविंशतिर्दीक्षा इति धानंजय्यः ८ एकाष्टका महाव्रतममावास्यातिरात्र इति ह्याह ९ अष्टादशेति गौतमः पौर्णमा- स्यतिरात्र इति ह्याह १० जातिकल्पो वा ११ षोडशरात्रप्रभृतीनि त्रिंशद्रात्रान्तानि अष्टादशदीक्षाण्येकान्नपञ्चाशद्रात्राणि च १२ द्वादश- प्रभृतीनि सत्राणि १३ तेन यजेताप्यहीनभूतेन १४ अहीनलिङ्गानि ह्यस्मिन् ब्राह्मणं दर्शयतीति १५ यथैकदीक्षणं द्वादशाहेन यजेत । यद्गौरीवितेनाहीनान् यजमानं वा अनुप्रतितिष्ठन्तं यजमानमेवैतया वर्द्धयन्ति । सहस्राण्यदित्सतामिति १६ अपरिमितानि सत्रलिङ्गानि १७ प्रथमेऽहन्याक्षारं ब्रह्म साम कुर्वन्नौधसस्तोत्रीये कुर्यात् १८ तस्यौष्णिहमेकाक्षरनिधनं स्थाने स्यात् १९ नौधसं वा २० अनाचारस्तूष्णिक्षु बार्हतानाम् २१ अनेकाक्षरणिधनानि चात्र भूयिष्ठानि सामानि २२ तत्र पौष्कलं कुर्यात् २३ ज्योतिष्टोमप्रायाणि

ह्यत्र सामानि २४ एतच्चैषामकृतं दशरात्रे भवतीति २५
इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले प्रथमः खराडः १

द्वितीयः खराडः

शक्वरीषु षोडशिना स्तुवीतेति गौरीवितं महानाम्नीषु स्यात् १ ऋक्चोदना हि तत्प्रकरणे २ रहस्यत्वाच्चानिर्देशः ३ प्रयवो वा निर्देशात् ४ इन्द्र जुषस्वेति वाधिकारशक्वरीप्रवादाभ्याम् ५ महानाम्नचस्त्वेव षोडशिसाम स्युः ६ न ह्येतास्वन्यत्सामापद्यते ७ अपि ह पृष्ठस्तोत्रीयेषु परोक्षाणि कुर्वन्नैतासु नित्यवत्साः करोति ८ कृता ह्येतस्मिन् स्थाने वज्रस्य ९ तासां स्थाने परोक्षदर्शनात्तदुद्धारः १० व्यतिहारे तु जामिसंचारौ स्याताम् ११ स्याद्वोभयत्र विधेः संचारस्तासां नानाहत्वाच्च १२ एतेनोपाया व्याख्याता बृहतः १३ अपि च तत्संचारधर्मितरम् १४ विराट्स्वनुष्टुप्सु च गौरीवितमेव स्यात् १५ स्वारप्रायाणि हि षोडशसामानि १६ अनुष्टुप्सु गौरीवितं कुर्वन् पुरांभिन्दुरिति कुर्यात् १७ तदनुष्टुभि नानदे षोडशि साम्नि वृत्य संचाराभ्याम् १८ शक्वरीषु काम्यानि निधनानीडास्थानेषु सर्वत्र स्युरित्याचार्याः तद्धि भूयिष्ठम् १९ ऊधस्येवेति गौतमधानंजय्यौ २० अत्र हि निधनवादं वदति २१ अथकारस्थान इति शौचिवृक्षि-रेवमल्पीयान्विकारः २२ अनियमात्सर्वेषु निधनस्थानेष्विति शाण्डिल्यायनः । तथा कौत्सः २३ उत्तमया स्तोत्रीयया पुरीषं संयुक्तमानन्तर्यादिति धानंजय्यो यथा द्वितीयोऽध्यायः २४ शक्व-रीभिः स्तुत्वा पुरीषेणेत्यपवृज्य पुरीषेणेति त्वाह । तस्मादसंयुक्तं स्यात् २५ पञ्चमेऽहनि रायोवाजीयं ब्रह्मसाम कुर्वंस्तस्य स्थाने कुर्यात् कल्पवृत्तेनोपपन्नम् २६ बार्हद्गिरं कुर्यात् २७ अरण्येगेयं हि सच्छन्दस्यं च समाने चाहनि दृष्टम् २८ पार्थुरश्मं कुर्वन् बार्हद्गिरस्यर्क्षु कुर्यादृचामसंचाराय २९

इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले द्वितीयः खराडः २

## तृतीयः खराडः

दशमस्याह्नोऽनङ्गमेके मानसं ब्रुवते बहिष्पत्नीसंयाजत्वात् १ अस्तोत्रस्थानं हि २ अग्निष्टोमावभित इति चाह ३ अवयवेन चास्य सर्गं वदति ४ अङ्गं तु स्यादधिकृत्याम्नानात् ५ अस्तोत्रमित्येक-स्तोत्रस्यापि स्वातन्त्र्यं न विद्यते ६ अग्निष्टोमावभित इति वादमात्रम् ७ यथा यदुक्थ्यो यज्ञक्रतोरनन्तरयायेत्यतिरात्रस्य गवामयने ८ न च सर्गावयवादधिकृत्याम्नातमनङ्गं स्याद्यथा रथन्तरं ज्योतिष्टोमस्य ९ अतिरात्रयोः षोडशिन्यनादिष्टऽप्रतिषिद्धे वा क्रियमाणे यत्र विराडुपपद्यते कुर्यादेनं तत्रेत्याचार्याः १० द्वादशाहे हि क्रियते न गवामयने तत्र तथोपपद्यते ११ अकारणं तु संपद्बहवो ह्यविराट्संपन्नाः १२ कारणं चापूर्वस्य विधेर्न विद्यते १३ सर्वत्र वाषोडशिकौ प्रकृतावन्तरयात् १४ न च ज्ञात्वाषोडशिकमाहान्यत्र व्याहताति-रात्राभ्यां बहुलं षोडशिमन्तम् १५ याथाकामी त्वतिरात्रस्य प्रकृतौ यदि वा षोडशिमानिति १६ तस्मादिहापि तथैव स्यात् १७ नियमार्थौ तु विधिप्रतिषेधौ १८ पूर्वस्मिंस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः सोमसामादेशात् गौरीवितस्य चानादेशात् १९ गवामयनन्यायेन तु पृष्ठ्यः २० अवच्छिन्नो हि तथा प्रवर्तते २१ दशरात्रवत्तु सच्छन्दो-मत्वात् २२ व्यूहसमाध्यव्यतिरेकात् २३ प्रत्नवच्चाद्यबहिष्पवमानम् २४ परेण ह्येतदस्य पत्नानुरूप इत्याह २५ दृष्टं च दशमार्थमव्यवच्छेदे २६ नवाहयोगश्च २७ अभीवर्तस्थाने श्यैतनौधसे च तास्वेव २८ यथौष्णिहे यासु सुज्ञानम् २९ स्वासु त्वावर्तीनि ३० यथा बृहतो वषट्कारणिधनं बृहद्रथन्तरे च तत्पृष्ठे षडहे ३१ अभीवर्तकारिताश्च प्रगाथाः ३२

इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले तृतीयः खराडः ३

## चतुर्थः खराडः

पूर्वस्मिन्नेकविंशतिरात्रेऽभिप्लवं तृतीयमनुलोमं चाह शौचिवृक्षिः १ न ह्यावृत्तिर्विज्ञायते २ प्रतिलोमं शाण्डिल्यो द्वावभिप्लवावित्य-

वचनात् ३ उच्चावचानि विषुवत्स्थाने ४ एतेनोक्ते विधृत्यादीनां तृतीयषष्ठे त्रयस्त्रिंशद्रात्रे च ५ अभिनिवृत्तिमुत्तरेषां दर्शयतीत्येके ६ संवत्सरादेशाद्रात्रिसत्रेषु तथैवाभिप्लवानामभ्यासः स्यादिति गौतमः ७ आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नो मानवा- दिर्बृहती तज्जामि स्यात्संततनिना ८ वैकृतत्वात्तु निवृत्तिः । पञ्चाहेष्वभिप्लवन्न प्रसृजेत् ९ तान् पृष्ठ्यस्तोमपञ्चाहानेकेऽनादेशे प्रकृतेः १० नाना ब्रह्मसामत्वात् ११ विश्वजिदन्वयात् १२ पृष्ठतः षष्ठस्यालोपवचनात् १३ ज्योतिर्गौरायुरित्यवचनात् १४ त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति चाह १५ समास्त्वेते १६ अभिप्लवपञ्चाहा एवेति गौतमः अधिकृतो हि सः सत्रेषु १७ इतरश्चादृष्टः १८ अभ्यासश्चास्य न प्राकृतस्यापि कृतः पञ्चाहस्य १९ गौरीविताभ्या- सङ्ग्योरनादेशात् २० पञ्चमेऽभिषोमाग्रहणात् २१ अतिरात्रो ज्योति- र्गौरायुर्गौरायुः पञ्चाहः २२ स द्वितीयः स तृतीयः इति चात्र परब्राह्मणम् २३ एष प्रत्ना वार्कजम्भे प्रतिपञ्चाहं यथा लोकं बृहद्रथन्तराश्च २४ एष प्रत्ना पूर्वे पत्नसि वार्कजम्भमुत्तरे २५ यद् विश्वजिति छन्दो- मानुपयन्तीति षष्ठेषु स्युर्यथापचितौ २६ प्रणयस्थानेषु वाविशेषात् २७ पवमानेषु वावापस्थानत्वात् २८ पार्ष्ठिकास्त्वेव स्तोमाः स्युः २९ पृष्ठ्याश्छन्दोमा निर्मिताः ३०

इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले चतुर्थः खण्डः

## पञ्चमः खण्डः

आञ्जनाभ्यञ्जनासु गार्हपत्य उपसत्सु सर्पींषि फाणयेयुः । पृथग्देव- सुरभीणि यान्युक्तानि ब्राह्मणेन १ तैः सुत्यासूपकरणवेलायां सवनानां पूर्वेण हविर्धाने आसीना आञ्जीरन्नभ्यञ्जीरंश्च २ भुक्त्वाग्नीध्रीय एवेति गौतमः ३ अहरहरेतत् कुर्युरिति धानंजय्यशाण्डिल्यौ ४ सर्वस्तोम एवेति गौतमः ५ पृष्ठ्य एके ६ अभिप्लवेष्वेके ७ संवत्सरसंमितासु प्रथमं दाशरात्रिकं प्रायणीयं स्यादित्येके । त्रिवृदेव कार्यमित्याह ८ प्रायणीयं तु चोदयित्वा तस्य स्तोमविकारं गृह्णाति ९ दाशरात्रिकाणां

चावयवप्रयोगो न विद्यते १० आवृत्तेऽभिप्लवे शाक्वरवर्णं स्यादित्याचार्याः सांवत्सरिकस्य द्रव्यस्यानुग्रहायेति ११ चतुर्थस्त्वभिप्लवो लुप्तस्तेन सहोपेयाद्यथा पृष्ठ्येन जनित्रम् १२ संतनि पूर्वप्रयुक्तमावृत्तिसामत्वात् १३ अपत्यं संप्रयोगात् १४ यणवं तु स्यात् १५ उपरिष्टाद्यदभिप्लवानां लोपस्थानं पूर्वस्मिन् पक्षसि तत्पुरस्तादावृत्तानाम् १६ एकस्मिंश्चैतदेव दृष्टम् १७ एतेनोक्तमेकषष्टिरात्रे १८ शतरात्रेऽभिप्रायमभिषुणवन्ति । समानत्रभिषुणवन्तीति सविकल्पः स्यात् १९ यावन्तः सुनुयुर्यथा सारस्वतेषु यत्र तु क्व च समाने देशे वा यथान्येषाम् २० अयान्त एव चक्रीभवन्ति सदोहविर्धानानि कारयित्वाहःसंस्थासु चक्राणि विपरिवर्तयेयुरित्याचार्यास्तदभिप्रायात्तद्रूपम् २१ अप्रयाणात् समानत्राभिषवः २२ अहरहरेतत् कुर्युरिति धानंजय्यशाण्डिल्यौ २३ अभिप्लव एवेति गौतमः २४ पृष्ठ्य एके २५ त्रिकद्रुकेष्वेके २६ उक्तकाला दीक्षा ब्राह्मणेन गवामयनस्य २७ वैशाखज्यैष्ठौ तु विकल्पेते । चैत्रीपक्षेणाषाढश्च २८ षष्ठ्यां वा दीक्षित्वा सप्तदश दीक्षाः कुर्वीरन् २९ एतेनोक्तमनादेशे सांवत्सरिकानां सांवत्सरिकानाम् ३०

इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले पञ्चमः खण्डः ५

## एकोनत्रिंशः पटलः । प्रथमः खण्डः

पञ्चसु माःसु बार्हताः प्रगाथाः आप्यन्त इत्यभीवर्तस्तोत्रीयाः १ ब्रह्मसामभूतस्य तस्य हि प्रकरणे श्रूयन्ते २ अन्योन्यः प्रगाथ इति च नानाप्रगाथस्तं दर्शयति ३ चतुःशतमैन्द्रा बार्हताः प्रगाथा दशतयीषु ४ तेषां बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुश्चान्यत्र स्थाने ५ शतस्यैकं चतुर्विंशे कुर्यादितरानभिप्लवेषु ६ एकोनत्रिंशत्सातोबार्हतास्तृचास्तेषामेकैकं तृतीये तृतीयेऽहनि कुर्यात् ७ कृता ह्येतस्मिन् स्थान आर्षेयकल्पेन ८ पञ्चमस्य मासस्योत्तमेऽभिप्लवे पञ्चमेऽहनि सतोबृहतीः कुर्यात् । प्रगाथाप्रभवात् ९ तेष्वाप्तेषु छन्दसी संयुज्यैतव्यमिति षष्ठे मासे १० गायत्रीपादमेकैकमुष्णिहामुपरिष्टात्

कुर्यात् ११ विष्टावानुपपत्तिर्ह्यन्यथा १२ सातोबार्हतशेषोऽष्टौ तान् कृत्वा संयोग इति गौतमः १३ बृहतीक्षयाद्ध्येवमामनतीति १४ चतुरुत्तरैरेव छन्दोभिरेतव्यमिति गायत्रीं चतुर्विंशे कुर्यादुष्णिहं प्रथम आभिप्लविकेऽनुष्टुभं द्वितीये बृहतीतरेषु १५ उद्धरेत्तु पञ्चमादह्नः सतोबृहतीः प्रभवन्ति हि प्रगाथाः १६ तत्र पङ्क्तिः कृत्वा षष्ठे वा त्रिष्टुभा षष्ठं मासमीयुर्जगती तृतीये स्वरसाम्नि १७ नवसातो-बार्हतशेषो द्वौ च प्रगाथौ तान् कृत्वा पङ्क्तिमुपेयुस्तेषां वोत्त-मस्य स्थाने तं षष्ठे तत ऊर्ध्वं त्रिष्टुभेति गौतमः १८ बृहत्या चैव त्रिष्टुभा चैतव्यमिति १९ त्रिष्टुभं चतुर्विंशे कुर्यात् । बृहतीं प्रथम आभिप्लविके २०

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले प्रथमः खण्डः १

द्वितीयः खण्डः

एष विपर्यासः सर्वस्मिन्नयने १ एतानि महानानात्वानि २ चतुरुत्तरप्रयोगो बृहतीत्रिष्टुभोश्च विपर्यासः षष्ठ एव मासे स्यादिति शौचिवृक्षिः ३ संशर इव वा एष छन्दसामिति हि तस्मिन्नुपोह्य विदधाति ४ सर्वत्रैवेत्याचार्याः ५ चतुरुत्तराणि ह्यनुपूर्वं प्रयुञ्जानो बृहतीं मध्य आमनति ६ त्रिष्टुभा षष्ठं मासमिति चाह ७ बृहतीक्षयात्पुनर्विपर्यासस्तस्मिन्नोपपद्यते ८ साप्राय्येण बृहती-ग्रहणमिति शौचिवृक्षिः ९ पञ्च मास इति वा रात्रयः १० स्त्रिष्टुभेति यथा भूयसवादः ११ अक्षीणाश्च बृहत्यः १२ सातोबार्हतशेषो ह्यष्टौ बृहद्रथन्तरकालेयस्तोत्रीयाश्च १३ नैस्त्रिष्टुभो व्यत्यस्येत् १४ तरणिरित्सिषसतीति कालेयं स्याद्यदहस्तस्य स्तोत्रीयेऽभीवर्तः १५ त्वामिद्धीति रथन्तरं यदहस्तस्य १६ स्वरसाम्नोर्वान्यतरस्मिन् रथन्तरस्य स्तोत्रीयं कुर्यात् १७ कृता हि तत्रान्या रथन्तरस्य १८ एवं व्याचक्षत आचार्याः १९ विंशतिशतं त्वपि प्रगाथानधीयते । तेभ्य एव प्रयुञ्जीत २० संरोधो हि चतुःशते २१ तत्र तथैव सतो बृहतीः कुर्यात् २२ उद्धरेत्तु पञ्चमादह्नः २३ शौचिवृक्षेः पुनर्विपर्यासो-

ऽन्याय्येन २४ अकृतक्रिया हि विधानम् । कृताः पुनर्बृहद्रथन्तर-
कालेयस्तोत्रीयाः २५

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

विंशतिशतस्य तु शेषो विद्यते । तेषां सप्तभिः सातो बार्हतैश्च चतुर्भिर्व्यत्यस्येत् १ त्रयस्त्रिंशत्प्रभृतीन् सह चतुर्विंशेषु कुर्यादुत्तमे च स्वरसाम्नीत्याचार्याः २ अभीवर्तप्रकरणे हि श्रूयन्ते । सोऽत्राप्यभीवर्त इति ३ अन्तरेण त्वेतावार्षेयकल्पेन कृतं षट्प्रगाथमिहापि तथैव स्यात् ४ तेषां यत्र समप्रयोगे तृतीये तृतीयेऽहनि सतोबृहत्य उपपद्येरन् कुर्यादेतास्तत्र ५ अनुपपद्यमानासु प्रगाथा एव स्युः ६ अनाचारो हि षडहेऽन्यत्र तृतीयादह्नः सतोबृहतीनाम् ७ स यथैव पुरस्तादभीव-र्तस्तोत्रीयान् कुर्य्यात् तथोपरिष्टादिन्द्रक्रतौ ब्रह्मसामानि निधनवन्ति तच्छन्दस्यानि ८ तच्छन्दस्याभावेऽप्यन्यानि गीतिनिधनोपेतानि ९ एवमुपेह्नितमिन्द्रक्रतुप्रगाथमनुगृह्णन्नाहतमस्तूयमानमनुशंसयन् सा मानि प्रतिकल्पयेत् १० न वा शंसयेदिति गौतमः ११ जनित्रं विश्वजिति १२ यानि पृष्ठ्ये तानि दाशरात्रिके पृष्ठ्ये १३ चत्वार्येषां छन्दोमेषु यथाभागं यथापृष्ठं वा १४ पौरुमीढं व्रते श्यैतं वा १५ अतिरात्रचतुर्विंशाभ्यां सह षष्ठो मासः पूर्वस्मिन्पक्षसि १६ व्रतातिरात्राभ्यां प्रथम उत्तरस्मिन् १७ यदेतानि सामानि न च्यवन्त इति गौरीवितस्योत्तरयोर्निहवश्यावाश्वे स्यातां सर्वत्र गवामयने १८ अनारभ्याच्यवनं विदधातीत्येके १९ अन्ववेत्यविधिस्त्वार्षेयकल्पेन कृतो गौरीवितश्यावाश्वयोर्निहवस्य च २० ब्राह्मणे न तथा सत्य-च्यवनं स्यात् २१

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले तृतीयः खण्डः ३

## चतुर्थः खण्डः

सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्नित्युद्गातृविकार एव स्यात् १

अश्रुतिभूता ह्यन्ये २ अवाप्यन्ते च सर्वशब्दस्तेष्वेव ३ सह स्तुवीरन्निति कर्मसमवायात् ४ पौर्वापर्यदर्शनादनुपूर्वं स्तवनं स्यात् ५ तिसृभिरुद्गातात्मन उद्गीयेति चात्मना जघन्यस्तवनं दर्शयति ६ ननादेशस्तवनं छन्दोगानामेव स्यात् ७ उद्गातैव सर्वेणोद्गायेदिति ह्युक्त्वा तस्य देशान् विदधाति ८ हविर्धाने शिरसा स्तुत्वा संरब्धाः प्रत्यञ्चमेयुस्ते दक्षिणेन धिष्णयान् परीत्य पश्चान्मैत्रावरुणस्य धिष्णयस्योपविश्येति च ये शिरसा स्तुवते तेषामेवेतरैः स्तवनं दर्शयति ९ इलान्दमग्निष्टोमसाम कार्यमित्यग्ने तवश्रवोवय इत्येतासां पूर्वासु तिसृषु दशाक्षरेष्वार्चिकान्यनुगानानि १० एवं तृचे भवति ११ षड्च इत्याचार्या अर्धर्चेष्वनुगानानि १२ द्वादशर्च इति शाण्डिल्यः १३ तत्रापरावाग्नेयौ तृचावाहरेदाते अग्नेऽग्निं तं मन्य इति १४ चतुर्थमेवानुगानं तृच इति वार्षगण्यः १५ अत्र हि निधनवादं वदति । व्रतमिति भवति । स्वरिति भवति । शकुन इति भवतीति १६ भक्तयश्च कल्पान्ते १७ नानासामवच्चैनान्येकेऽधीयतेऽधीयते १८

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले चतुर्थः खण्डः ४

त्रिंशः पटलः । प्रथमः खण्डः

छन्दोमदशाहयोर्दशमस्य त्रयस्त्रिंशमग्निष्टोमसाम स्यादित्येके त्रिकं सार्पराज्ञं दशमप्रदेशात् १ यथाभूयसवादश्चतुर्विंशमिति २ ऋृक्सामानि तु प्रदिश्यन्ते दशमात्सर्वं ह्यहरधिकृत्य चोद्यते चतुर्विंशमेव ३ न चावक्ष्यत् ४ प्रत्यक्षविधानाच्च यथाभूयसवादः ५ ब्राह्मणविहिते च स्तोमे कल्पप्रदेश ऋृक्साम्नां भवति ६ त्रिंशिनः सुत्यामासाः सर्वत्र संचक्षीरन् ७ कौण्डपायिनामयने च हाविर्यज्ञि-कान् ८ तापश्चिते च दैक्षोपसदान् ९ दृतिवातवतोरयने द्वावेकोनौ मासौ सुनुयुः १० त्रिवृताविति गौतमः ११ त्रयस्त्रिंशाविति धानंजय्यः १२ उभौ वा त्रिंशिनौ स्याताम् । यथैतद्ब्राह्मणम् १३ तथा सत्यष्टम्यां पूर्वपक्षस्य दीक्षित्वा पञ्चदशदीक्षाः कुर्वीरन् १४ एतेनोक्तं सर्पसत्रे १५ पञ्चदशानां दशमस्याह्नः आष्टादंष्ट्रान्तान्युक्थानि स्युरित्याचार्याः

। षोडशापायाद्धि निवृत्तं नार्मेधम् १६ यथा त्रिवृत्सु मौक्षमुक्थापायादिति १७ अवचनात्तु निवृत्तिर्न स्याद्यथान्येषां साम्नाम् १८ वचनं च कारणं नार्मेधस्य न षोडशी दृश्यते चाभीक्ष्णमषोडशिकेषु १९ तस्यायनविचारः २० पृष्ठ्येनैकैको मासो वर्तेतेत्येके २१ पृष्ठ्यस्तोमेनेति शाण्डिल्यः २२ अभिप्लवपृष्ठ्या-भ्यामिति शौचिवृक्षिः २३ पृष्ठ्यस्याह्नैकैकेनेति शाण्डिल्यायन-धानंजय्यौ २४ ज्योतिष्टोमेनेति लामकायनः २५ तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् २६ यथार्षेयकल्पसमाम्नाय इति क्षैरकलाम्भिः २७

इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले प्रथमः खण्डः १

द्वितीयः पटलः

पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्य १ तस्योपसदन्त उपवसथवत् कर्म कृत्वातिरात्रमुपेयुरिति शाण्डिल्यः एवं हि गृह्यते वृत्तिः २ हुतिसंस्था एकान्नत्रिंशतमहान्यग्निहोत्रं जुहुयुः ३ मासमेवेति गौतमः ४ सुत्यानां तु पुरस्तादुपवसथकर्म स्याददतिरात्रश्चैवं च गृह्यते वृत्तिः ५ अव्यवायश्च हविर्यज्ञैः सुत्यानाम् ६ अश्रवणादतिरात्रो न स्यादिति धानंजय्यः ७ प्रत्यन्ताद्ध्यन्येषु चोदयन्नेह विदधातीति ८ तस्योपसदन्त एवोपवसथकर्म कुर्युरष्टादशभ्यो वोर्ध्वं शौनासीर्येभ्यो राजानं क्रीणीयुरेवमनन्तरं सुत्याभ्यो भवतीति ९ दीक्षोपसदां व्यवायोऽन्याय्य इति शाण्डिल्यायनः १० ते मासि सोमं क्रीणन्तीति वानन्तरं दीक्षाभ्यः दर्शयति ११ उपवसथकर्मैवानन्तरं सुत्याभ्यः स्यादिति १२ आग्नीध्रीयादङ्गारान्मार्जालीयं हृत्वा पृथक् स्थाली-पाकांश्च श्रपयित्वा पितृयज्ञान् कुर्वीरन् १३ ततो दक्षिणातिप्रणयेयुः पैतृयज्ञिकायाम् १४ आहवनीयाद्दक्षिणतो वरुणप्रघासेषु १५ तस्मिन् कुर्युर्यद्दक्षिणत आहवनीये कृत्यम् १६ उपवसथकर्म चेत् कृतं स्यात् १७ यथाप्रकृत्यकृते १८ अग्निहोत्रमासे दीक्षितान्नस्याध्वर्युर्जुहुया-दन्वारब्धा इतरे स्युः १९ हवींष्येवेष्ट्ययनेषूपालभेरन् २० अग्नि-होत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन् २१ अवभृथन्यङ्गं

चेति शाण्डिल्यायनः २२ समिधस्त्वादध्युस्तत्र पुरस्तादुक्ताः स्युः २३ सर्वं क्रियेतेति धानंजय्यः २४ मासं दर्शपौर्णमासाभ्यामित्यामावास्येन पूर्वपक्षमुत्तरं पौर्णमास्येन २५ आमावास्ये पितृयज्ञः सकृद्धूत्वा न स्यादिति गौतमः २६ सकृच्च न स्यादिति शाण्डिल्यः २७ अहरहः स्यादिति धानंजय्यः २८

इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

मासं साकमेधैरिति ब्राह्मणमनुसंधत्ते मासं साकमेधैरिति गृहमेधीयेनेष्ट्वा तदैव शेषं संस्थापयेयुः १ एवं त्रिंशत्कृत्व उपेता भवन्तीति २ द्व्यहापवर्गस्त्वेषां प्रकृतौ पञ्चदशकृत्व एवाभ्यस्येयुः स मासः ३ अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवोऽग्निहोत्रोपस्थानमधीयत ऋत्विज उत्तरैरभिप्रेता वषट्कारिणोऽध्वरे ४ अत्सरुकैश्चमसैर्भक्षयेयुः कुण्डप्रतिरूपैः ५ होत्रा समास उक्तो ब्राह्मणेन ६ स्वादासनादुपसंचारं ब्रह्मेतरे होत्रे कुर्यात् ७ तथोद्गातृप्रस्तोतारावाग्नीध्रश्च ८ व्यतिक्रममेके शास्त्रसंभवात् ९ यो नेष्टा स उद्गातेत्यभविष्यत् १० गृहपतिर्गृहपतिः सुब्रह्मण्यः इति असमासं तयोर्दर्शयति ११ एतेनोक्तस्तापश्चितस्य दीक्षादिः १२ तस्यायनविचाराः १३ ज्योतिष्टोमोऽतिरात्रः षोडशिमानहरहः स्यादिति धानंजय्यः १४ चत्वारो ज्योतिष्टोमा अभिजिदेष पञ्चाहः षट्सु मासेष्वभ्यस्येत १५ महाव्रतं विषुवान् १६ अथैत एवावृत्तास्तैरावृत्तैरुत्तरान् षण्मासान् १७ विश्वजिदभिजित्स्थाने १८ तत्पुरुषस्य नारायणस्यायनम् १९ एष एव पञ्चाहः केवलः कृत्स्नं संवत्सरं मासान्तेषु विश्वजिदभिजित्स्थाने तद्यावज्जीवायनं ब्रुवते २० स्तोत्रीया हि वर्षशतभक्ति समासे २१ अभिजिदहरहस्तदग्नेः २२ ज्योतिष्टोमो वा रथन्तरपृष्ठः २३ बृहत्पृष्ठ इन्द्रस्य २४ व्यत्यासे बृहद्रथन्तरे षष्ठे स्यातां तदिन्द्राग्न्योः २५ तदिन्द्राग्न्योरयनम् २६ उभयसाम ब्रह्मप्रजापत्योः २७ वायोर्वैरूपपृष्ठो व्रतं वा २८

आदित्यस्य वैराजपृष्ठो विश्वजिदा २९ अपां शक्वरीपृष्ठः ३० गवां रेवतीपृष्ठः ३१ प्रजापतेर्वामदेव्यपृष्ठः ३२ विश्वेषां देवानां स्वरपृष्ठः ३३ सूर्यस्य महादिवाकीर्त्यपृष्ठः ३४ महेन्द्रस्य महाव्रतपृष्ठः ३५

इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले तृतीयः खण्डः

## चतुर्थो खण्डः

क्षुल्लक तापश्चितमहातापश्चितयोर्दीक्षोपसत्सुत्यामासाः पृथक्च- तुर्वर्गाः संवत्सराः परस्य १ संवत्सराः परस्य २ अयनमासतो वृद्धिसंरोधौ गवामयने क्लृप्तौ ३ उत्तरस्यायनविचाराः ४ गवामयनं चतुरुपेयुः ५ पूर्वाणि वा त्रीणि दृतिवातवतोरयनचतुर्थान्युपेयुः ६ कौसुरुबिन्दं वायनं स्यात् ७ ज्योतिष्टोमेन वा ८ तेन त्रीण्युत्तराणि ९ तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् १० दृतिवातवतोरयनेनेति क्षैरकलाभ्भिर्यथार्षेयकल्पसमाम्नाय इति ११ अग्निष्टोमास्त्रिवृत उक्थ्याः परे इति १२ तत्रावचनादतिरात्रा न स्युर्विषुवन्तश्चेति शाण्डिल्यः १३ इतरः सत्रन्याय इति धानंजय्यः १४ अतिरात्रावभितः स्याताम् १५ मध्ये विषुवान् बृहत्पृष्ठो रथन्तरमध्यंदिनः पञ्चदशसप्तदशः १६ एकैकस्मिन्वै तत्संवत्सरवर्गे स्यात् १७ उत्तमे वा वर्गाणाम् १८ पृथग्वा संवत्सरेषु १९ तेषां यथास्तोमं विषुवन्तः स्युः २० रथन्तरपृष्ठो बृहद्ब्रह्मसामा त्रिवृतां स्यात् २१ बृहत्पृष्ठो रथन्तरमध्यंदिनः परेषु २२ यजनीयेऽहनि प्रसवः स्यात् । पूर्व्वपक्षे समार्द्धमासातिवर्तिषु २३ अपरपक्षे विषमेषु २४ सहस्रसाव्ये सहातिरात्राभ्यां सहस्रमहान्याचार्याः सहस्रसाव्यमिति ह्याह २५ अन्तरेणेति शौचिवृक्षिः २६ सहस्रमहानीत्यन्तरेणातिरात्रावाह २७ तस्यायनकल्पः २८ अतिरात्रस्त्रिकद्रुकस्त्रिरात्राश्चतुःषष्टिशतम- भिप्लवानां रात्रो व्रतमतिरात्र इति व्रतमतिरात्र इति २९

इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले चतुर्थः खण्डः ४

## एकत्रिंशः पटलः । प्रथमः खराडः

दक्षिणे तीरे सरस्वत्या विनशनस्य दीक्षेरन् सारस्वताय १ षष्ठ्यां पूर्वपक्षस्येति गौतमोऽमावास्यायामतिरात्रः स्यात् २ एवं स्वस्थानमामावास्यं प्रयुज्यते ३ सप्तम्यां वा दीक्षित्वामावास्यायां यजनीयेऽहनि प्रसवः स्यादिति धानंजय्यः । समाधय उत्तराभ्यां सुत्याभ्याम् ४ स्वस्थानं चैवामावास्यं प्रयुज्यते ५ पूर्वपक्षो ह्यामावास्यस्थानमिति ६ पुरा रात्रेः सायं दोहं दोहयेरन् ७ संस्थितेऽतिरात्रे प्रातर्दोहम् ८ तेन सान्नाय्येन यजेरन् ९ सान्नाय्येनेष्ट्वाध्वर्युः शम्यां परास्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्येष्टिसंस्थानस्तु प्रास्येत् १० तदुक्तं ब्राह्मणेन ११ चक्रीवत्ता च १२ तथापि पत्नीशाला स्याच्छामित्रश्च १३ तानि यथादेशं वर्तेरन् समश्चेद्भूमिभागः स्यात् १४ अनुपूर्वं विषमे १५ वेदेः पांसून् हरेयुस्तथोत्तरवेदेर्विष्ण्येभ्यश्च १६ तान्निविश्य यथायतनं निवपेयुः १७ उलूखलबुध्नो यूपः इति पृथुबुध्नः स्यात् १८ प्रकृष्य इति तं पूर्वं कर्षयेयुरेवानुद्यच्छन्तः १९ उपोप्त एवेत्यनिखातस्तिष्ठेत्पांशुभिः पर्युप्तः २० नोपरवान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवा नाम श्वभ्रास्तेषां प्रतिषेधः २१ आलिखेयुरेवैनान्न खनेयुः २२ तेषां पौर्णमास्यां गोष्टोमो भवतीति २३ यजनीयेऽहनि स्यादित्याचार्याः २४ संस्थिते गोष्टोमे पौर्णमासमिति संस्थानान्ताद्विदधाति २५ ते तमापूर्यमाणं ते तमपक्षीयमाणमिति कृत्स्नवत्पक्षाभिधानम् २६ पर्वणि त्वेव स्यात् २७ तेषां पौर्णमास्यां तेषाममावास्यायामिति हि प्रत्यक्षेण विदधाति २८ कर्मानन्तरीयमात्रं च संस्था दर्शपौर्णमासयोः २९ ते तमापूर्यमाणं ते तमपक्षीयमाणमिति च यथाभूयसवादः ३० संस्थिते गोष्टोमे तदहरेव पौर्णमासेन हविषेष्ट्वोद्युञ्जेरन्निति धानंजय्यः ३१ अयजमानास्तत्रैव तां रात्रिं वसेयुरिति शाण्डिल्यः ३२ उद्युज्यैवेति गौतमः श्वोभूते तु यजेरन् ३३

इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले प्रथमः खराडः १

## द्वितीयः खण्डः

एतेनायुर्व्याख्यातः १ तत्र धानंजय्येनामावास्यायां सायंदोहं दोहयेरन् पुरा प्रातरनुवाकात्प्रातर्दोहमिति २ अतिचिरमेवं दुग्धं सान्नाय्यं तिष्ठेदिति शाण्डिल्यायनः ३ इतरयोरेवान्यतरत् कुर्युः ४ कौण्डपायिने भोजनमुक्तमिष्ट्ययनेषु ५ दर्शपूर्णमासधर्माश्च ६ चन्द्रप्रमाणास्त्वेव पर्वसु स्युः ७ तद्धि प्रत्येकाप्येतीति दृषद्वत्या अप्यये अपोनप्त्रीयामिष्टिं निर्वपेरन्यदि सोदका स्यात् ८ अप्यनुदकायामिति धानंजय्यः ९ शते गोष्वृषभमप्यृजन्तीति वत्सतरीशते अगर्भिणीषु १० ता यत्र गव्यमभयं स्यात्तत्र रक्षेयुः ११ पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च १२ तासु सहस्रं संपन्नासु पूर्वपक्षे गामतिरात्रं कृत्वा दत्वैना उत्तिष्ठेयुः १३ यदा सर्वज्यानिं जीयन्त इति तासामेवाधिकारः । प्रकरण भूतत्वात् १४ तत्र विश्वजिदतिरात्रः १५ मृते गृहपतावायुः १६ प्रादुर्भावान्तादेतयोरापदोरुत्तिष्ठेयुरप्यपरपक्षे १७ न सकृच्च न सरस्वत्यामवभृथमभ्यवेयुर्देवयजनभूता ह्येषा भवति १८ अविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्तु १९ यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानमिति २० तथा प्रास्येयुर्यथैनं पूर्वपक्ष आगच्छेयुः २१ तं प्राप्य प्रायणीयमतिरात्रमुपेत्योत्तिष्ठेयुरिति शाण्डिल्यः २२ यदेनात्किंचिदुत्थानमागच्छेत् प्रायणीयमेवातिरात्रमुपेत्योत्तिष्ठेयुरिति धानंजय्यः २३ प्लक्षं प्रास्रवणं प्राप्य पुरस्तादतिरात्रस्याग्नये कामायेष्टिः स्यादिति शाण्डिल्यः । उपरिष्टादिति धानंजय्यः २४ तस्यामश्वां च पुरुषीं च धेनुके यज्ञोपकरणशेषांश्चाभिरूपायान्यस्मै दद्युः २५ स्वामिनो हि सर्वे सत्रेषु तेषां प्रतिग्रहणं न विद्यते इति २६ उक्तोऽवभृथो ब्राह्मणेन २७ अपृष्ठशमनीयमेतत् २८

इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले द्वितीयः खण्डः २

## तृतीयः खण्डः

एतेनैवोत्तरे व्याख्याते १ तत्राग्नये कामायेष्टिरपोनप्त्रीया च स्रुवहोमौ स्याताम् २ इष्टिरेवाग्नये कामायोपरिष्टाच्चेदतिरात्रस्येति शाण्डिल्यः

३ पर्वणोरिन्द्रकुक्षी ४ पौर्णमास्यामभिजित् ५ पूर्वस्याग्निष्टोमौ त्रिवृती राथन्तरबार्हते पूर्वपक्ष उक्थ्ये पञ्चदशे राथन्तरबार्हते अपरपक्ष इति गौतमः ६ ते न पक्षयोः संचारयेत् ७ सर्वत्र त्वेव त्रिवृत्पञ्चदशौ व्यत्यासं स्याताम् ८ तयोर्यस्मिन्ननुपेते पर्वागच्छेत्तेनोत्तरं पक्षमुपक्रमेत ९ एतेनोक्तमुत्तरस्य त्रिकद्रुकेषु १० दार्षद्वततौरयोर्व्रतानि ११ तिष्ठेद्दिवासीत नक्तम् १२ हविरुच्छिष्टभोजी स्यात् १३ अमांसाशी १४ अलवणाशी १५ न स्त्रियमुपेयात् १६ यथा प्रकृत्याहिताग्निवृत्तिं वर्तयेत् १७ दार्षद्वते संवत्सरं ब्राह्मणस्य गा रक्षेदृत्विज आचार्यस्य वा १८ नैतन्धवानामाम्र्माः सरस्वत्यां तेषामेको व्यर्णस्तस्मिन् संवत्सरमग्निमिन्धीतथैकाग्नेः परिचर्या तया १९ अग्निहोत्रमेव जुह्वत् पुरस्ताच्चेदाहिताग्निः २० संवत्सरादूर्ध्वं परीणं नाम स्थली कुरुक्षेत्रे तस्यामग्नीनाधाय यथाकालमन्वारम्भणीयेष्टयेष्ट्वा प्रसृज्येतेति शाण्डिल्यः २१ दर्शपूर्णमासाभ्यां यजेतेति धानंजय्यः २२ सायंप्रातराहुतीरेव हुत्वा पुरस्ताच्चेदाहिताग्निः २३ सरस्वतीदृषद्वत्योः संभेदं प्राप्याग्नेयेनाष्टाकपालेन यष्टुमुपक्रमेत २४ अत्र शम्याप्रासनं यथा सारस्वतेषु २५ न तु प्रक्रमान् प्रक्रामेत् २६ काममनेकामिष्टिमेकैकेनाह्ना संस्थापयेत् २७ दृषद्वत्या दक्षिणेन तीरेणेयात् २८ तस्याः प्रभव्यमर्मं प्राप्यैतयेष्टयेष्ट्वा त्रिप्लक्षापहरणं प्रति यमुनामवभृथमभ्यवेयात् २९ यत्र क्व च ततो दूरे यमुनातीरे स्यादिति धानंजय्यः ३० तत्रैतयेष्टयेष्ट्वा स्वयं साम गायन्नवभृथमभ्यवेयात् ३१ अगायन्वा ३२ प्रव्रजिष्यतोऽयनमिदं मन्य इति शाण्डिल्यः ३३ तदैव मनुष्येभ्यस्तिरोभवतीति स्वर्गं लोकमाक्रमते ३४ व्यावर्तते श्रेयान् भवतीति वा ३५ न ग्रामं पुनरेयादिति वा ३६ उदकान्तर्धानाद्वा ३७ यथा सरजस इति ३८

इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले तृतीयः खण्डः ३

चतुर्थः खण्डः

संवत्सरमहरहस्तौरेण यजेत १ षष्ठ्यां चैत्री पक्षस्येत्याचार्याः २

पञ्चम्यामिति शाण्डिल्यायनः ३ प्रातराहुतिं हुत्वा व्रतोपायनी-यमोदनमशित्वा केशश्मश्रूणि वापयित्वाहतं वसनं परिधाय परिसमुह्याग्नीन् परिस्तीर्य प्रणीताः प्रणीय दण्डं पाणौ कृत्वा मेखलामाबध्य नवनीतेनाङ्गान्यभ्यज्ञ्य पश्चात् गार्हपत्यस्योपविश्य स्वयं कृष्णाजिनं प्रतिषज्येत तूष्णीम् ४ पश्चिमेनाहवनीयं दक्षिणा-तिक्रम्यैतत् कुर्यात् ५ तस्य तिस्र इष्टयः । पूर्वाह्ण एका । पृथक्त्वं मध्यंदिनापराह्णयोः ६ तासु पृथगनुपूर्वं हवींषि यान्युक्तानि ब्राह्मणेन ७ एका वैव स्यात्तस्यां तानि सर्वाणि स्युः ८ तत्र सामगानं यथा पूर्वस्मिन् ९ उभयोस्त्ववभृथादुदेत्य यत् पुरस्तादिष्टचयनं तेनेष्ट्वा सोमेन यजेत १० यावन्ति वा हवींषि पुरस्तात्तावद्भिर्वा पशुभि-स्तद्दैवत्यैः ११ सर्पसत्रं गवामयनं स्तोमसंस्थाविकृतमित्येके १२ षण्डकुषण्डावभिगरापगराविति ह्याह १३ प्रत्यक्षविहितं त्वार्षेय-कल्पेन तत्रानुमानं न विद्यते १४ अभिगरापगरावेवोपोत्तमेऽहनि स्याताम् १५ पौर्णमासीप्रसवं त्रिसंवत्सरम् १६ तस्य याथाकामी दीक्षाणाम् १७ षष्टिरिति शाण्डिल्यः १८ प्रथमोत्तमौ संवत्सरौ व्यतिहरेदिति धानंजय्यः १९ अभिप्लवस्तोमपृष्ठ्यदेशरोहार्थः २० अमावास्याप्रसवे सहस्रसंवत्सरे सहस्रसंवत्सरे २१

इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले चतुर्थः खण्डः ४

समाप्तोऽयं ग्रन्थः

Reference: *Drāhyāyaṇa Śrauta Sūtram (With the Commentary of Dhanvin)*, B.R. Sharma, ed., (Allahabad: Rashtriya Sanskrit Sansthan, 1983).